Poona Oriental Series No. 42

# वैजयन्ती

# THE VAIJAYANTĪ

OF

## YĀDAVAPRAKĀŚA.

---

FOR THE FIRST TIME EDITED

BY

GUSTAV OPPERT, Ph.D.,
PROFESSOR OF SANSKRIT AND COMPARATIVE PHILOLOGY,
PRESIDENCY COLLEGE, MADRAS, ETC.

PUBLISHED FOR THE
MADRAS SANSKRIT AND VERNACULAR TEXT PUBLICATION SOCIETY;
AND SOLD BY
THE SCHOOL BOOK AND VERNACULAR LITERATURE SOCIETY,
OLD COLLEGE, NUNGUMBAKAM;
AND BY MESSRS. ARCHIBALD CONSTABLE & CO.,
14, PARLIAMENT STREET, LONDON.

1893.

MADRAS:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.




# PREFACE.

THE *Vaijayantī* is a well known, highly esteemed, and often quoted but hitherto unpublished Sanskrit Vocabulary. Copies of the whole text are extremely rare. This circumstance may be explained by the fact, that only one part of the dictionary became really popular and was largely used by commentators and other paṇḍits. The Vaijayantī is in fact divided into two large sections; the former, which treats about synonyms, I have called *Paryāyabhāga*, and the latter *Nānārthabhāga*, as it contains the homonyms. Of these two, the latter portion is commonly used, and the majority of MSS. contain that only.

The Paryāyabhāga is arranged in five chapters or kāṇḍas, namely, the *Svarga*, *Antarikṣa*, *Bhūmi*, *Pātāla*, and *Sāmānya* kāṇḍas, while only three chapters, the *Dvyakṣara*, *Tryakṣara*, and *Śēṣa* kāṇḍas, are found in the Nānārthabhāga. The Vaijayantī contains therefore altogether eight kāṇḍas.

Another distinguishing feature of the Vaijayantī is that it contains the most important words of the sacred as well as of the secular literature. This accumulation of Vaidika and Laukika expressions accounts for its greater bulk, and indeed the Vaijayantī exceeds, as far as I know, all the other classical Sanskrit dictionaries in length.

The name of the author is *Yādavaprakāśa*. He has been identified with the celebrated preceptor of the still more renowned Vaiṣṇava reformer *Bhagavad Rāmānujācārya*. As the birth-place of Yādavaprakāśa is mentioned the village *Tirupputkuḻi* or *Gṛddhrasaras* near Kāñcīpuram or Conjivaram. He was originally a staunch adherent of the Advaita

doctrine of Śaṅkarācārya, and is said to have composed the so-called *Yādavabhāṣya*, a commentary on the Brahmasūtra, which, together with the Śaṅkarabhāṣya, he taught his pupils. In course of time differences arose between the *Guru* and the *Śiṣya*, who passionately discussed their conflicting religious principles. As standing evidence of this controversy there can be seen even now a stone pillar in the *Vijayarāghavasvāmi* temple at Tirupputkuḻi on which are sculptured the figures of the two hermits, Yādavaprakāśa holding in his hand the *ēkadaṇḍa* or one single rod as an emblem of the Advaitasannyāsin, while Bhagavad Rāmānujācārya carries the *tridaṇḍa* or three rods, as an indication of his being a Viśiṣṭādvaita sannyāsin.

Eventually, however, Yādavaprakāśa changed his views and became an adherent of the principles advocated by his former pupil, and in proof of this fact may be quoted a picture on the walls of the *Varadarājasvāmi* temple in Kāñcīpuram, which represents Yādavaprakāśa surrounded by his pupils, among whom Bhagavad Rāmānujācārya is conspicuous.

The *Yatidharmasamuccaya*, a work greatly esteemed by pious Vaiṣṇavas, is also ascribed to him, as well as the *Chandōvicitibhāṣya*, a commentary on the Piṅgala chandas.

Yādavaprakāśa lived about 900 years ago: he spent the rest of his life in Kāñcīpuram, and died there as a Vaiṣṇavasannyāsin.

I have used eleven MSS. (*A, B, C, D, E, F, G, H, I, K* and *L*) for this edition of the Vaijayantī.

*A* is the only MS. which contains all the eight kāṇḍas complete. It is written in Malayālam characters and belongs to the library of H.H. the Ciria Anujan Rāja of Patiññāre Kōvilakam near Calicut, as quoted in the first volume of my *Lists of Sanskrit Manuscripts in Private Libraries of Southern India*. I obtained it through the assistance of Mr. W. Logan, late Collector of Malabar.



*B* is also written in Malayālam characters. It is however incomplete, as it contains only four kāṇḍas, the fourth being even defective towards the end. It belongs to the library of H.H. the Mahārāja of Travancore, and was kindly confided to my care by the late Mahārāja Rāma Varma.

*C* is a MS. in Grantha characters and was obtained from M.R.Ry. S. Veṅkaṭavaradatātācārya of Kāñcīpuram. It is in a very imperfect state, is full of mistakes in spelling, and does not contain the last portion of the fourth and the whole of the fifth kāṇḍa.

All the other MSS., *D* to *L*, do not possess the beginning but only the three last chapters, *i.e.*, the Nānārthabhāga; some in a complete, others in a more or less imperfect form. Seven of these MSS. are written in Grantha, and one in Malayālam characters.

I have not been able to procure a commentary of the Vaijayantī, and had, moreover, in many places to rely alone on one MS., the one I mentioned first. It was often difficult to ascertain with sufficient accuracy the meaning of the words and their reading was not seldom doubtful, for the MSS. are in many places illegible and there exists a great resemblance between different letters of the Malayālam characters. It is therefore possible that mistakes have to my regret occasionally crept into the text.

The text of the Vaijayantī is followed by the *Variæ lectiones*, after this comes the *Vocabulary* with some Appendices containing readings contained in other Nighaṇṭus, Corrigenda and Addenda.

I trust that this attempt at an edition of the Vaijayantī will be received with consideration, especially as in a life full of official duties I can only devote my leisure hours to literary pursuits, and it is not always easy to preserve one's energy in so trying a climate like that of Madras.

I cannot conclude this preface without acknowledging the great help and valuable advice I have received from four learned paṇḍits, M.R.Ry. V. Tātadēśikatātācārya, M.R.Ry. T. N. Narasiṁhācārya, M.R.Ry. S. Vaidyanātha Sāstri and M.R.Ry. N. Raṅgācārya. Of these scholars, I am, however, specially indebted to the invaluable services rendered to me by M.R.Ry. T. N. Narasiṁhācārya, who throughout has displayed a great interest in this publication of the Vaijayantī.

MADRAS,
13*th March* 1893.

GUSTAV OPPERT.

---

## SCHEME OF TRANSLITERATION.

k, kh, g, gh, ṅ, ḥ, h, a, ā.
c, ch, j, jh, ñ, ś, y, i, ī, e, ē, ai.
ṭ, ṭh, ḍ, ḍh, ṇ, ṣ, r, ṛ, ṝ.
t, th, d, dh, n, s, l, ḷ, l.
p, ph, b, bh, m, ḥ, v, u, ū, o, ō, au. Anusvāra ṁ.
Ṟ, ḻ, ḻ, are peculiar to the Dravidian languages.

---

# CONTENTS.

II.



---

श्रीः

# वैजयन्ती

## परिभाषा

ओंकारार्थाय तत्त्वाय वाच्यवाचकशक्तये ।
ब्रह्मसंज्ञाय पूर्वेषां गुरूणां गुरवे नमः ॥ १ ॥
प्रकाश्याष्टविधं लिङ्गं निर्लिङ्गं वचनानि च ।
वैजयंतीति विख्यातं क्रियते नामशासनम् ॥ २ ॥
स्त्रीपुन्नपुंसकं लिङ्गं संकीर्णं तच्च पञ्चधा ।
नृस्त्री नृषण्डष्षण्डस्त्री त्रिलिङ्गं वाच्यालिङ्गकम् ॥ ३ ॥
समासलिङ्गाद्विधितस्साहचर्यात् पृथक्कृतेः ।
लिङ्गं विद्यात् प्रयोगाच्च क्तिन् सर्वत्रापि च स्त्रियाम् ॥ ४ ॥
यत् प्रवृत्तं समासस्य लिङ्गं तत्स्यात् समासिनाम् ।
विशेषविधितः क्वापि लिङ्गं तत्राप्ययं क्रमः ॥ ५ ॥
स्त्रीलिङ्गे स्त्रीत्ययं शब्दः पुंलिङ्गे ना पुमानिति ।
षण् क्ली नपुमिति क्लीबे ये च षण्डार्थवाचिनः ॥ ६ ॥
त्रिष्वित्युक्तिर्वाच्यलिङ्गे त्रयीशब्दस्त्रिलिंगके ।
अस्त्रीत्यादि निषेधेषु नृषण्डादीतरद्वयम् ॥ ७ ॥
ज्ञातैर्लिङ्गैस्साहचर्यात् क्वचित्स्याल्लिंगनिश्चयः ।
एकत्र सर्वे पुंलिगास्त्रियोऽन्यत्रान्यतो नपुम् ॥ ८ ॥

इत्येकस्यापि पर्याया लिंगायात्र पृथक्कृताः ।
प्रयोगात्प्रायशो लिंगमुदन्तस्संशये पुमान् ॥ ९ ॥
सन्दिग्धद्विवचोऽन्तं क्ली ना स्याद्बहुवचोऽन्तकम् ।
समासे स्युः पृथक् सर्वे शब्दा बहुवचोऽन्तके ॥ १० ॥
न पूर्वशब्दभागत्र पुनस्त्वन्तमथादितः ॥ १०" ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां परिभाषाध्यायः)

---



## अथ स्वर्गकाण्डः

### आदिदेवाध्यायः

स्वर्गो नाकस्सुरावास ऊर्ध्वलोकः फलोदयः ।
सौरिको भोगभूमिस्स्त्री दिवि द्यौश्च त्रिविष्टपम् ॥ १ ॥
अमर्त्यभवनं गौश्च त्रिदिवस्स्यात् स्वरव्ययम् ।
देवा निलिंपा मरुतो गीर्वाणा वायुनास्सुराः ॥ २ ॥
आदित्या ऋभवोऽस्वप्ना विवस्वन्तो दिवौकसः ।
आदितेया दिविषदो लेखा अदितिनंदनाः ॥ ३ ॥
सुपर्वाणः क्रतुभुजो निर्जरा अमृताशनाः ।
बर्हिर्मुखा विट्पतयस्त्रिदशा हव्ययोनयः ॥ ४ ॥
अमर्त्याश्चाथ न स्त्री स्याद्दैवतं देवता स्त्रियाम् ।
त्रय एवादिदेवास्स्युर्ब्रह्मविष्णुमहेश्वराः ॥ ५ ॥
आजानजास्स्वतोदेवाः कर्मदेवास्तु कर्मभिः ।
ब्रह्मा विधाता विश्वात्मा धाता स्त्रष्टा प्रजापतिः ॥ ६ ॥
हिरण्यगर्भो द्रुहिणो विरिञ्चः कश्चतुर्मुखः ।
पद्मासनस्सुरज्येष्ठश्चिरजीवी सनातनः ॥ ७ ॥
शतानन्दश्शतधृतिस्स्वयंभूस्सर्वतोमुखः ।
परमेष्ठी विश्वरेताः पुरुषो हंसवाहनः ॥ ८ ॥
पद्मभूः प्राणदो वेधा द्रुघणो नाभिजो विधिः ।
वाग्वाणी भारती भाषा गौर्गीर्ब्राह्मी सरस्वती ॥ ९ ॥
विष्णुर्नारायणो बभ्रुश्चक्रपाणिर्जनार्दनः ।
दैत्यारिः पुण्डरीकाक्षस्त्रिककुद्विष्टरश्रवाः ॥ १० ॥
पीतांबरो हृषीकेशो विष्वक्सेनश्चतुर्भुजः ।

श्रीवत्सश्श्रीपतिश्शार्ङ्गी श्रीवत्सांकोऽच्युतो द्रुणः ॥ ११ ॥
वासुदेवस्स्वभूश्चक्री वैकुण्ठः पुरुषोत्तमः ।
अरिष्टनेमिरजितश्श्रीधरो यज्ञपूरुषः ॥ १२ ॥
मुञ्जकेशी मुररिपुर्गदापाणिरधोऽक्षजः ।
अनन्तशायी बृन्दाको मुकुन्दो धरणीधरः ॥ १३ ॥
शतानन्दश्शतावर्तो युगावर्तस्सुरोत्तमः ।
कालकुन्थो रन्तिदेवः केशवो गरुडध्वजः ॥ १४ ॥
पद्मनाभो विश्वरूपः कृष्णो हरिरसंपुषः ।
कैटभारिर्ब्रह्मनाभो गोविन्दो मधुसूदनः ॥ १५ ॥
आचारा वैष्णवी सूक्ष्मा लक्ष्मीः पुष्टिर्निरंजना ।
जीवनी मोहनी माया नवैता विष्णुशक्तयः ॥ १६ ॥
कौस्तुभोऽस्य मणिर्लक्ष्म श्रीवत्सो नन्दकस्त्वसिः ।
चापश्शार्ङ्गं पाञ्चजन्यश्शंखश्चक्रं सुदर्शनम् ॥ १७ ॥
कौमोदकी गदाथास्य मत्स्याद्यैस्समनामकाः ।
अवतारा नृसिंहस्तु हिरण्यकशिपुद्विषन् ॥ १८ ॥
उपेन्द्र इन्द्रावरजो वामनो बलिकण्ठकः ।
आदित्यो द्विपदस्तार्क्ष्यस्त्रिविक्रम उरुक्रमः ॥ १९ ॥
विष्णुश्च जामदग्न्यस्तु रामो दाशरथिः पुनः ।
राघवो जानकीकान्तो रामो रावणसूदनः ॥ २० ॥
[दूषणारिः खरारिश्च कुंभकर्णारिरेव च ।
राक्षसघ्नस्सुखकरः कौसल्यानन्दवर्धनः ॥ २१ ॥
पार्थिवेन्द्रो धनुष्पाणिर्बली दशरथात्मजः ।]
रामस्संकर्षणः पौरो बलदेवो हलायुधः ॥ २२ ॥
बलभद्रः प्रलंबारिः कालिन्दीकर्षणो हली ।



तालांको रेवतीकान्तस्साच्वतो मुसली बली ॥ २३ ॥
भद्रांगो भद्रवदनः कामपालस्सितासितः ।
बलो नीलांबरश्चाथ तस्य संवर्तकं हलम् ॥ २४ ॥
सौनन्दमस्य मुसलं कृष्णो दामोदरोऽद्रिधृत् ।
दाशार्हो नरकारातिर्वनमाली गदाग्रजः ॥ २५ ॥
शैनिः कंसरिपुश्शौरिस्सारथिस्तस्य दारुकः ।
वसुदेवोऽस्य जनको दुन्दुरानकदुन्दुभिः ॥ २६ ॥
प्रद्युम्नो मन्मथः कामो मारो मनसिजस्स्मरः ।
कन्दर्पो दर्पकोऽनंगो मीनांको मकरध्वजः ॥ २७ ॥
पुष्पधन्वा रतिपतिश्शंबराररिनन्यजः ।
शूर्पकारिर्मधुसखः पञ्चेषुर्विषमायुधः ॥ २८ ॥
बंधुर्वामो जराभीरुर्हृच्छयो मधुसारथिः ।
ब्रह्मसूरनिरुद्धस्स्यादृश्यकेतुरुषापतिः ॥ २९ ॥
अथान्ये ह्यवतारास्स्युर्नरनारायणावृषी ।
अश्वो हयशिराश्शेषः कपिलो व्यास इत्यपि ॥ ३० ॥
दत्तात्रेयश्च कल्कीच बुद्धश्चेत्येवमादयः ।
कपिलस्तु महाविष्णुर्व्यासस्सत्यवतीसुतः ॥ ३१ ॥
पाराशर्यो द्वैपायनः कृष्णद्वैपायनोऽपिच ।
बुद्धस्तु श्रीघनश्शास्ता बोधिसत्त्वो विनायकः ॥ ३२ ॥
समन्तभद्रस्सर्वज्ञो मारजिल्लोकजिज्जिनः ।
षडभिज्ञो दशबलो धर्मराजस्तथागतः ॥ ३३ ॥
मुनीन्द्रस्सुगतश्शाक्यो मुनिरद्वयवाद्यपि ।
शाक्यसिंहस्तु सर्वार्थसिद्धश्शौद्धोदनिर्गुरुः ॥ ३४ ॥
गौतमश्चार्कबंधुश्च जिनस्त्वर्हंस्त्रिकालदृक् ।

अष्टकर्मपरिभ्रष्टो वीतरागश्च केवली ॥ ३५ ॥
लक्ष्मीः पद्मालया शक्तिर्मा क्षीरोदसुतेन्दिरा ।
रमाब्धिजा भार्गवी च स्त्रीलिंगाश्चांबुजाह्वयाः ॥ ३६ ॥
गरुडः काश्यपसुतो गरुत्मानुरगाशनः ।
सुपर्णीतनयस्तार्क्ष्यो वैनतेयो महेन्द्रजित् ॥ ३७ ॥
पन्नगारिर्विष्णुरथस्सुपर्णो विहगाधिपः ।
महेश्वरः पशुपतिश्श्रीकण्ठः पांसुचन्दनः ॥ ३८ ॥
शंकरो गिरिशो रुद्रो गिरीशश्शशिभूषणः ।
भद्रेश्वरश्चन्द्रमौलिः पिनाकी शशिशेखरः ॥ ३९ ॥
कपर्दी धूर्जटिश्शर्वः कपाली नीललोहितः ।
ईश ईश्वर ईशानो भर्गो मृत्युञ्जयो मृडः ॥ ४० ॥
व्योमकेशो महादेवः प्रमथाधिपतिश्शिवः ।
शूली दक्षाध्वराराातिः कामारिः परमेश्वरः ॥ ४१ ॥
कृत्तिवासा अहिर्बुध्न्यो नीलग्रीवस्त्रिलोचनः ।
गंगाधरो विरूपाक्षो वामदेवो वृषध्वजः ॥ ४२ ॥
भूतेशः खण्डपरशुस्स्थाणुरन्धकसूदनः ।
भगनेत्रान्तको भीमस्त्रिपुरारिर्दृढायुधः ॥ ४३ ॥
कटाटंको जटाटीरो जटाझाटो महानटः ।
झिंटीकान्तो रेरिहाणस्सर्वज्ञो नंदिवर्धनः ॥ ४४ ॥
स्थालो डिंडीश उड्डीशः कण्ठेकालो महाव्रतः ।
कृशानुरेता जोटिंगः कंकटीक उमापतिः ॥ ४५ ॥
खट्वांगी मन्दरमणिरुलंदो वृषवाहनः ।
उग्रः कटप्रूर्दिग्वासा झाण्डष्षाण्डोऽकुतश्चनः ॥ ४६ ॥
बहुरूपोऽर्धमकुटो दशबाहुर्दशाव्ययः ।



ज्ञानं वैराग्यमैश्वर्यं तपस्सत्यं क्षमा धृतिः ॥ ४७ ॥
स्रष्टृत्वमात्मसंबंधोऽप्यधिष्ठातृत्वमित्यपि ।
अव्ययानि दशैतानि शंभोरव्ययमस्त्रियाम् ॥ ४८ ॥
वामा ज्येष्ठा शिवा रौद्री चित्तोन्मादकरी सुखा ।
काली कलेबरा भूतदमनी चेशशक्तयः ॥ ४९ ॥
कपर्दोऽस्य जटाजूटः खट्वाङ्गोऽस्य सुखंघुणः ।
पिनाकोऽजगवं युग्यमजगावमजीगवम् ॥ ५० ॥
प्रमथास्स्युः पारिषदा नन्दी स्यान्नन्दिकेश्वरः ।
अथ कूश्माण्डकः केलिकिलो गणपतिप्रियः ॥ ५१ ॥
भृङ्गरीटः पुनर्भृङ्गी चर्मी भृंगिरिटिश्शलः ।
वृषाणो लूनदोर्बाणो भेलुकस्तु कृतालकः ॥ ५२ ॥
वीरभद्रस्तु देवाजो विघ्नेशस्तु विनायकः ।
लंबोदरो हस्तिराज एकदन्तो गजाननः ॥ ५३ ॥
द्वैमातुरः परशुभृदाखुयानो गणाधिपः ।
कुमारश्शरजस्स्कन्दस्तारकारिरुमासुतः ॥ ५४ ॥
महासेनो महातेजाश्शक्तिपाणिर्गुहोऽग्निभूः ।
वैजयन्तास्सिद्धसेनस्सेनानीश्शिखिवाहनः ॥ ५५ ॥
स्वामी गाङ्गेयगौरेयब्रह्मचारिमहौजसः ।
षाण्मातुरः कार्त्तिकेयो ब्रह्मगर्भष्षडाननः ॥ ५६ ॥
सुब्रह्मण्यो नीलदंष्ट्रः क्रौञ्चारिः कुक्कुटध्वजः ।
अस्य शाखो विशाखश्च नैगमेषश्च पृष्ठजाः ॥ ५७ ॥
उमा मेनात्मजा रौद्री रुद्राणी सर्वमङ्गला ।
आर्याऽद्रिजा महादेवी शर्वाणी पार्वती शिवा ॥ ५८ ॥
भ्रामरी रेवती षष्ठी गौतमी बाभ्रवी सती ।

अपर्णापरुजा जारी शण्डिली वारुणी हिमा ॥ ५९ ॥
बर्हिध्वजा शतमुखी योगिनी परमेष्ठिनी ।
सुनन्दा नन्दिनी नन्दा नन्दयन्ती कलापिनी ॥ ६० ॥
कालरात्री महारात्री रक्तदन्त्येकपाटला ।
एकपर्णा भद्रकाली महाकाली करालिका ॥ ६१ ॥
दुर्गा कात्यायनी चण्डी कैटभी सिंहवाहना ।
यमेन्द्रकृष्णमैनाकरामाणां भगिनी स्वसा ॥ ६२ ॥
विंध्यमन्दरकान्तारमलयेभ्यश्च वासिनी ।
चण्डमुण्डा तु चामुण्डा चर्चा मार्जारकर्णिका ॥ ६३ ॥
कर्णमोटी महाचण्डी महागन्धा कपालिनी ।
ब्राह्मी माहेश्वरी चैन्द्री वाराही नारसिंह्यपि ॥ ६४ ॥
कौमारी वैष्णवी चेति ता एतास्सप्त मातरः ॥ ६४ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां
वैजयन्त्यां स्वर्गकाण्ड आदिदेवाध्यायः)

---



## लोकपालाध्यायः

इन्द्रो दुश्च्यवनो वज्री वृत्रारिर्वासवो वृषा ।
वृद्धश्रवाश्शुनासीरस्सहस्राक्षो दिवस्पतिः ॥ १ ॥
वास्तोष्पतिर्बलरिपुः पुरुहूतः पुरन्दरः ।
मघवान् पूर्वदिक्पालः पृतनाषाट् सुराधिपः ॥ २ ॥
संक्रन्दनो हरिहयो गोत्रभित् पाकशासनः ।
पुलोमशत्रुर्हरिवानूर्ध्वधन्वा शचीपतिः ॥ ३ ॥
कारुर्जंभरिपुर्जिष्णुर्मरुत्वान् हरिवाहनः ।
स्वाराडृभुक्षास्सुत्रामा बिडौजास्सितकुञ्जरः ॥ ४ ॥
भूरिश्रवाश्चित्ररथस्सुनासीरो युधिष्ठिरः ।
परमन्युर्वज्रपाणिश्शतमन्युर्विभीषणः ॥ ५ ॥
आखण्डल उग्रधन्वा मेषाण्डोऽप्सरसां पतिः ।
खदिरो माहिरो दाल्मिश्शयीचिर्वियुनो जयः ॥ ६ ॥
गौरावस्कन्दिवन्दीकौ वारणो देवदुन्दुभिः ।
महेन्द्रो बाहुदन्तेयस्तुराषाड्वज्रदक्षिणः ॥ ७ ॥
वृषण्वसु धनाद्यस्य पुराजश्शान्तिकर्मकृत् ।
सुतो जयो जयन्तश्च जयदत्तोऽप्यथो सुता ॥ ८ ॥
जयन्ती देवनन्दी तु द्वास्थस्सूतस्तु मातलिः ।
प्रासादो वैजयन्तोऽस्य वैजयन्तो ध्वजोऽपि च ॥ ९ ॥
अमरावत्यस्य पुरी स्यात्सुदर्शनमित्यपि ।
अश्वोऽस्य वृषणश्वस्स्यादारामस्त्वस्य नन्दनम् ॥ १० ॥
क्रीडासरो नंदिसरः क्रीडाभूस्त्वस्य नन्दिका ।
पुलोमजा शचीन्द्राणी पौलोमी जयवाहिनी ॥ ११ ॥

ऐरावतो राथन्तरिरभ्रनागोऽभ्रमुप्रियः ।
ऐरावणश्चतुर्दंष्ट्रस्सूर्यभ्रातारिमर्दनः ॥ १२ ॥
अस्त्रियौ वज्रकुलिशौ भिदुरं शतधारकम् ।
व्याधामः पुंसि दंभोलिश्शतकोटिः पविर्भिदुः ॥ १३ ॥
वह्निर्वैश्वानरो धासिः कृष्णवर्त्मा समन्तभुक् ।
जातवेदा बृहद्भानुर्वीतिहोत्रस्तनूनपात् ॥ १४ ॥
दहनो ज्वलनश्शुष्मा रोहिताश्व उषर्बुधः ।
शोचिष्केशस्त्रिधामाग्निरुदर्चिः पावकोऽनलः ॥ १५ ॥
हिरण्यरेतास्सप्तार्चिर्वसुरेता हुताशनः ।
कृपीटयोनिरर्चिष्मान् धूमकेतुर्दुरासदः ॥ १६ ॥
मन्वजिह्वस्सप्तजिह्वस्स्रुग्जिह्वो हव्यवाहनः ।
आश्रयाशो वातसखः कृशानुर्वातसारथिः ॥ १७ ॥
वमिर्भुजिः पचिस्साचिश्चिरिर्विंचतिरंचतिः ।
जागृविस्सहुरिस्साढ्रिर्दमुना हवनो हवः ॥ १८ ॥
सृदाकुर्भरथः पीथो जुहुराणेषिराशिराः ।
तेजोऽप्पित्तमपांपित्तं स्वाहाग्नायी च तत्प्रिया ॥ १९ ॥
स्कन्धाग्निस्स्थूलकाष्ठाग्निर्मुर्मुरस्तु तुषानलः ।
छागणस्तु करीषाग्निर्मेघवह्निरिरंमदः ॥ २० ॥
कुक्ष्यग्निर्हृच्छयोऽथौर्वे द्वौ संवर्तकबाडवौ ।
सहरक्षा दवो दुध्रस्तार्णे क्षामतरत्समौ ॥ २१ ॥
क्रव्यात्तु प्रेतदाहाग्निर्देवाग्निर्हव्यवाहनः ।
सहरक्षास्तु दैत्यानां पितॄणां कव्यवाहनः ॥ २२ ॥
अपोनपात्तु यज्ञाग्निः क्रत्वग्निस्स्यादपान्नपात् ।
शुक्रान्वाहार्यपचनावध्वरे दक्षिणानले ॥ २३ ॥



गार्हपत्यो गृहपतिः पवमानश्च पश्चिमे ।
शंस्य आहवनीयश्च पूर्वोऽग्निर्हव्यवाहनः ॥ २४ ॥
सभ्यावसथ्यौ तत्पूर्वावायुस्स्यात् पाशुबंधिकः ।
पथिकृद्वर्त्महोमेषु पदहोमेष्वनीकवान् ॥ २५ ॥
आधानादिष्वहस्तानस्सुरभिर्यूपकर्मणि ।
ब्रह्मौदनाग्निर्भरतो यविष्ठस्सवनाहुतौ ॥ २६ ॥
महिमांस्तु विवाहाग्निर्वैश्वदेवाग्निरद्भुतः ।
व्रतांते बहुरन्नादस्सुलभः पाकयज्ञिकः ॥ २७ ॥
सव्यस्तु मृतके वह्निरपसव्यस्तु सूतके ।
धूमस्तरिर्मेघवाही धूपोऽसौ गंधवासितः ॥ २८ ॥
शिखा जिह्वार्चिरपुमान् कीला ज्वाला च नृस्त्रियोः ।
झलका तु महाज्वाला प्रवर्ग्यो नीलकोऽपि च ॥ २९ ॥
सप्त जिह्वाः पुनः काली कराली विष्फुलिंगिनी ।
धूमवर्णा विश्वरुचिर्लोहिता च मनोजवा ॥ ३० ॥
त्वयी स्फुलिंगोऽपुञ्जो ना खड्गांगश्चाथ संज्वरः ।
सन्तापस्स्यात् प्रकाशस्तु द्योत आलोक आतपः ॥ ३१ ॥
दीप्ताग्रं काष्ठमुल्का स्यात्क्रमुकोऽलातमुल्मुकम् ।
अंगारोऽस्त्री प्रशान्तार्चिरिंगालः कारिकाग्निविट् ॥ ३२ ॥
भसितं भस्म भूतिस्स्यादग्न्युत्पात उपाहितः ।
यमः पितृपतिर्दण्डधरो महिषवाहनः ॥ ३३ ॥
यमराड्यमुनाभ्राता मन्दो वैवस्वतोऽन्तकः ।
सावित्रेयश्श्राद्धदेवस्समवर्ती परेतराट् ॥ ३४ ॥
कालः कृतान्तश्शमनः कीनाशो दक्षिणाधिपः ।
धर्मराजः पुराणान्तः कालकुन्थो विशीर्णपात् ॥ ३५ ॥

पत्नी यमस्य धूमोर्णा चित्रगुप्तस्तु लेखकः ।
पंजिका त्वग्रसन्धानी कालीची तु विचारभूः ॥ ३६ ॥
नरको नारकोऽप्येष निरयो दुर्गतिस्त्रियाम् ।
अवीच्यन्ता रौरवाद्याः प्रायशो नरका नरि ॥ ३७ ॥
नारका जंतवः प्रेता यात्या अप्यातिवाहिकाः ।
प्रेताः परेता वेताला गंधर्वास्सत्त्वका ग्रहाः ॥ ३८ ॥
यातना कारणा दुःखं त्वामनस्यं प्रसूतिजम् ।
स्यात् कष्टं कृच्छ्रमाभीलं त्रिष्वेषां तद्वदर्थकाः ॥ ३९ ॥
अथ रक्षांसि यातूनि राक्षसा अललोहिताः ।
रात्रिश्चरा रात्रिचराः क्रव्यात्क्रव्यादनैर्ऋताः ॥ ४० ॥
कैकसेया यातुधानाः पुरुषादाः प्रवाहिकाः ।
अनुषा विधुरा रक्तग्रहाश्शंकव आशराः ॥ ४१ ॥
अलक्ष्मीर्निर्ऋतिर्ज्येष्ठा रावणस्तु हराननः ।
दशास्यो विंशतिभुजश्चतुष्पान्मानमन्दिरः ॥ ४२ ॥
लंकेश्वरो यातुपतिस्सन्नाहोऽस्य विचोलकः ।
चन्द्रहासस्तु खड्गोऽस्य क्रीडाभूस्त्वमरावली ॥ ४३ ॥
अशोकवनिकोद्यानं त्रिशिरास्समनीपदः ।
इन्द्रजिन्मेघनादस्स्यात् प्रहस्तस्स्यादलंबुसः ॥ ४४ ॥
वरुणश्शीतलो वामो दुंदुभिस्संवृतोऽप्पतिः ।
अंबुवासोऽम्बुकान्तारः पाशी मकरवाहनः ॥ ४५ ॥
प्रचेता यादसान्नाथः प्रत्यगाशापतिस्तथा ।
नलभूषण उद्दामो गौरी तु वरुणप्रिया ॥ ४६ ॥
वातो वायुर्जगत्प्राणश्शुषिलश्श्वसनोऽनिलः ।
गन्धवाहो गन्धवहो मातरिश्वा समीरणः ॥ ४७ ॥



युजिनो लघुगो वातिर्ध्वजप्रहरणो जगत् ।
दैत्यदेवो वहः प्राणो नभःप्राणोऽकतिस्सरः ॥ ४८ ॥
आशुगः पवनस्स्पर्शः पवमानः प्रभञ्जनः ।
मरुद्धूलिध्वजो मर्कस्समीरोऽग्निसखश्चलः ॥ ४९ ॥
शुष्मिर्महाबलो वेगी नभोजातस्सदागतिः ।
नभस्वान् मारुतश्शीघ्रः पृषदश्वः प्रकम्पनः ॥ ५० ॥
संक्रावातस्सवृष्टिस्स्याद्वात्यावातस्तु मण्डली ।
मृदुवातश्शिञ्चिलिको लेढा लिट् सौरतोऽपि च ॥ ५१ ॥
मध्यमो हारितो नेरी यौनिकस्स्वेदचूषकः ।
खरस्खरिंगणोऽथासौ ग्रीष्मो झंझानिलोऽनिलः ॥ ५२ ॥
पयोदन्तस्तु पवनो वसन्तेऽमलपालिकः ।
गरवायुर्निदाघेऽल्पशिशिरे सपुटानिलः ॥ ५३ ॥
जारवायुस्तु हेमन्ते शारदस्सारणश्शरः ।
गोगन्धनः पुरोवात उत्तरस्तु हिमानिलः ॥ ५४ ॥
रंहस्तरः क्ष्टी प्रसभो जवो वेगस्स्यदो रयः ।
कुबेरो यक्षराड्यक्षः कुतनुः किन्नरेश्वरः ॥ ५५ ॥
मनुष्यधर्मैलबिलः पौलस्त्यो धनदो धनी ।
कैलासनाथस्त्रिशिरा धनाध्यक्षो वटाश्रयः ॥ ५६ ॥
निधिपालो वैश्रवणो वित्तेशो नरवाहनः ।
राजराजः पराविद्धः किशाली गुह्यकेश्वरः ॥ ५७ ॥
एकपिङ्गो रुद्रसखः कुडः पुण्यजनेश्वरः ।
इच्छावसूरत्नगर्भो रत्नहस्तस्सितोदरः ॥ ५८ ॥
अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः ।
पुरी वस्वौकसारास्य विमानं पुष्पकोऽस्त्रियाम् ॥ ५९ ॥

निधानं गूढकोशो ना निधिश्शेवधिरस्त्रियाम् ।
भेदाः पद्मो महापद्मश्शंखो मकरकच्छपौ ॥ ६० ॥
मुकुंदकुंदनीलाश्च चर्चश्चेति निधेर्नव ॥ ६०॥ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां
वैजयन्त्यां स्वर्गकाण्डे लोकपालाध्यायः)

---



यक्षाद्यध्यायः

स्पर्शानन्दास्त्वप्सरसस्सुमदाश्च रतेमदाः ।
स्वर्वेश्याश्चाथ खाषेयो यक्षोऽथ सुरगायनः ॥ १ ॥
गंधर्वो गातुगांधर्वो सिद्धास्स्युस्सनकादयः ।
भूतापुत्रास्तु भूतानि भूताश्च शिवपार्श्वगाः ॥ २ ॥
किन्नरास्स्युः किंपुरुषा मयवोऽश्वमुखाश्च ते ।
गुह्यका माणिचरयस्तथा देवजनास्सुताः ॥ ३ ॥
विद्याधरास्तु द्युचराः खेचरास्सत्ययौवनाः ।
पिशाचस्स्यात् कापिशेयो ऽन्नजुर्दर्वश्च पिण्डकः ॥ ४ ॥
देवयोनय एते स्युस्स्वर्वेश्याद्यास्सरक्षसः ।
नासत्यदस्रौ नासत्यावश्विनौ वरवाहनौ ॥ ५ ॥
आश्विनेयौ यज्ञवहौ देववैद्यौ वरान्तकौ ।
नासिक्यावाश्विनौ दस्रौ विश्वकर्मा द्युवर्धकिः ॥ ६ ॥
त्वष्टा नाम स देवानां मयो नाम सुरद्विषाम् ।
सनत्कुमारो वैधात्रो नारदः कलहप्रियः ॥ ७ ॥
रुद्रा वसव आदित्या विश्वे साध्या मरुद्गणाः ।
तुषिता भास्वराद्याश्च बहवो देवतागणाः ॥ ८ ॥
मन्वन्तरेषु भिद्यन्ते देवास्सप्तर्षिभिस्सह ।
असुरा दानवा दैत्या दैतेया देवशत्रवः ॥ ९ ॥
पूर्वदेवाश्शुक्रशिष्या रसागेहा हरिद्विषः ।
ईदृङ्चेत्यादिभिर्मन्त्रैस्सप्त प्रोक्ता मरुद्गणाः ॥ १० ॥
स्वानभ्राडिति गंधर्वगणा एकादशोदिताः ।
सुधर्मा स्याद्देवसभा दिव्य उच्चैश्श्रवा हयः ॥ ११ ॥

मेरुस्सुमेरुस्स्वर्णाद्रिर्मणिसानुस्सुरालयः ।
महामेरुर्देवगिरिर्गोधुक् चाथापरेऽद्रयः ॥ १२ ॥
तालांका मेरुगण्डाश्च ये मेरुं परितस्स्थिताः ।
मन्दाकिनी वियद्गंगा स्वर्नदी सुरदीर्घिका ॥ १३ ॥
पञ्चैते देवतरवो मन्दारः पारिजातकः ।
सन्तानः कल्पवृक्षश्च हरिचन्दनमस्त्रियाम् ॥ १४ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां
वैजयन्त्यां स्वर्गकाण्डे यक्षाद्यध्यायः)

---

(स्वर्गकाण्डस्समाप्तः)

---



## अथ अन्तरिक्षकाण्डः

### ज्योतिरध्यायः

अंतरिक्षं नभो व्योम गगनं सुरवर्त्म खम् ।
वियद्विष्णुपदं दिव्यं वायुवर्त्म विहायसम् ॥ १ ॥
तारावर्त्मांबरं मेघवर्त्म चाकाशमस्त्रियाम् ।
दिग्दिशाशा ककुब्दीर्णी हरिद्देववधूस्सरिः ॥ २ ॥
अव्ययीभावोऽपदिशमवान्तरदिशा विदिक् ।
क्रमात् पूर्वादिदिङ्नाथा इन्द्राद्याश्शंकराष्टमाः ॥ ३ ॥
लोकपालास्ततो ग्राह्या दिक् चैन्द्रीत्यादयो भिदाः ।
आग्नेयी तु चराशा स्यान्नैर्ऋती तु दिगन्धकी ॥ ४ ॥
मारुत्यनन्ता शार्वी तु शालाक्षाप्यपराजिता ।
कौबेर्यादिषु तूदीची प्राच्यवाची प्रतीच्यपि ॥ ५ ॥
ब्राह्मी तूर्ध्वाथ नागी स्यान्नारकी चाधरा ककुप् ।
दिङ्मण्डलं चक्रवालं दिगन्तः करिशोलुकम् ॥ ६ ॥
दिङ्मध्ये करिणीचारं दिग्युग्मे मण्डपीठिका ।
अभ्यन्तरं त्वन्तरालमवकाशोऽन्तरं पदम् ॥ ७ ॥
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तस्सार्वभौमस्सुप्रतीकश्च दिग्गजाः ॥ ८ ॥
करिण्योऽभ्रमुः कपिला पिंगलानुपमा क्रमात् ।
ताम्रपर्णी शुभदती चांगना चांजनावती ॥ ९ ॥
अर्कस्सूर्योऽर्यमा सूरो द्वादशात्मा दिवाकरः ।
मार्ताण्डस्सविता भानुर्भातुः पूषा दिनप्रणीः ॥ १० ॥
सप्तसप्तिः पद्मबन्धुस्तपनोऽनूरुसारथिः ।

द्युमणिर्हरिदश्वोऽद्रिरशीतांशुर्विकर्तनः ॥ ११ ॥
द्युमान् कुमुद्वतीशत्रुस्त्विषांपतिरहर्पतिः ।
भास्करोऽहस्करो भास्वान्विवस्वाञ्जलतस्करः ॥ १२ ॥
रश्मिमाली दृगध्यक्षः कर्मसाक्षी त्रयीतनुः ।
तर्पुर्मार्तण्डमुण्डीरपाथिपेरुगभस्तयः ॥ १३ ॥
पासिर्द्वेशानो रात्रिद्विट् प्रभाकरविभाकरौ ।
खाध्वनीनः खतिलकः खगः खाङ्कस्तमोरिपुः ॥ १४ ॥
चण्डांशुरंशुमानंशुस्सहस्रांशुस्सदागतिः ।
आदित्यो मिहिरो मित्रो रविः प्रत्यूषडंबरः ॥ १५ ॥
घृष्टिपादमयूखांशुसांध्योद्योतगभस्तयः ।
किरणोऽस्त्रौ च रोचिः स्त्री रश्मिरस्त्री मरीचिवत् ॥ १६ ॥
तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने ।
शतत्रयं हिमोत्सर्गे तावद्धर्मस्य सर्जने ॥ १७ ॥
आनन्दनाश्च मेध्याश्च नूतनाः पूतना इति ।
शतं शतं वृष्टिवहास्तास्सर्वा अमृतास्स्त्रियः ॥ १८ ॥
ता एव भन्दना मन्दाः कातनाः कोतनाः क्रमात् ।
अथ मेष्यश्च पोष्यश्च ह्लादिन्यश्च शतं शतम् ॥ १९ ॥
हिमोत्सर्गाय तास्सर्वास्सर्वाश्चन्द्राश्च नामतः ।
ता एव रेश्यो वाश्यश्च मेध्याश्चेति यथाक्रमम् ॥ २० ॥
अथ रुद्रा विश्वभृतः ककुहाश्च शतं शतम् ।
घर्माय शुक्रास्तास्सर्वा माध्व्यश्शाक्वर्य इत्यपि ॥ २१ ॥
आलोकस्तु प्रभा भा रुग्रुचिदीधितिदीप्तयः ।
अथातपो रौद्रमिद्धं मृगतृष्णा मरीचिका ॥ २२ ॥
संज्ञास्व रेणुर्द्युमयी त्रसरेणुस्सुवर्चला ।



त्वाष्ट्री प्रभाप्यथच्छाया विक्षुभा भूमिमय्यपि ॥ २३ ॥
हिमद्युतिश्शशी चन्द्रश्चन्द्रमाश्शशभृद्विधुः ।
परिज्मा रोहिणीकान्तो निशानाथो निशाकरः ॥ २४ ॥
पुनर्युवा दशाश्वो ग्लौरिन्दुः कुमुदबान्धवः ।
ओषधीशो निशाकेतुर्मृगलक्ष्माऽत्रिनेत्रजः ॥ २५ ॥
हृद्यांशुरंशुरब्जारिरमृतांशुः कलानिधिः ।
यजत्तस्तपसः क्लेदुस्स्यन्दस्स्पन्दो यथासुखः ॥ २६ ॥
प्राचीनतिलको जर्णः व्यापृवस्सृप्रस्तृपिस्तृपत् ।
उडुराजश्शशांकश्च समुद्रनवनीतकम् ॥ २७ ॥
चन्द्रपादास्तु संवाला ज्योत्स्ना च शशिनः प्रभा ।
चन्द्रिका चन्द्रिमा चान्द्री कौमुदी चन्द्रगोलिका ॥ २८ ॥
अंकश्चिह्नमभिज्ञानं लांछनं लक्ष्म लक्षणम् ।
पुष्पवन्तौ सहैवोक्त्यां सूर्याचन्द्रमसावुभौ ॥ २९ ॥
परिग्रहोपरक्तौ तु ग्रस्तार्केन्द्वोरथ ग्रहे ।
उपप्लवोपरागौ द्वौ स तु सन्निहितो रवेः ॥ ३० ॥
गजच्छायाप्यथार्केन्द्वोः परिधिः परिवेषकः ।
कुजारमंगलांगारा लोहितांगो धरासुतः ॥ ३१ ॥
कर्षको रुधिरो भौमः प्रव्यालोऽप्यथ हर्षुलः ।
बुधश्श्यामांग एकांगस्सौम्यश्चान्द्रमसायनिः ॥ ३२ ॥
वाचस्पतिरनिर्वापस्सुराचार्यो बृहस्पतिः ।
गीष्पत्यांगिरसौ चक्षाश्चारुश्चित्रशिखण्डिजः ॥ ३३ ॥
प्रचक्षा दीदिविश्चाथ शुक्रो दूतो दिवाचरः ।
तिर्यग्गाम्यसुराचार्य उशना भार्गवः कविः ॥ ३४ ॥
मन्दः खोडोऽसितः क्रोडश्छायापुत्रश्शनैश्चरः ।

सौरिस्स्थिरगतिः कोणो दीर्णांगो युगवर्तकः ॥ ३५ ॥
श्रुतकर्मा नीलवासा वक्रः कोलस्स्थिरश्शनिः ।
स्वर्भानुर्ग्रहकल्लोलस्सैंहिकेयो विधुन्तुदः ॥ ३६ ॥
राहुरभ्रपिशाचश्च केतवो विकचाः कृशाः ।
धूमजाश्शिखिनो ब्रह्मपुत्राश्श्रीमन्त आहिकाः ॥ ३७ ॥
तारा भं रात्रिजं धिष्ण्यं सन्नक्षत्रमुडुर्न ना ।
मृगशीर्षं मृगशिरो मार्गायण्याग्रहायणी ॥ ३८ ॥
इन्वकास्तच्छिरोदेशे तारका इल्वला मताः ।
योग्यस्तिष्यश्च पुष्यस्याद्यामकौ तु पुनर्वसू ॥ ३९ ॥
निष्ट्या स्वाती विशाखे तु राधे आर्द्रा तु कालिनी ।
श्रवणे श्रोणा मूले तु मूलवर्हण्यथ श्रविष्ठासु ॥ ४० ॥
मंदागाश्च धनिष्ठाश्च भरण्योऽपभरणीषु योग्याश्च ।
ज्येष्ठा ज्येष्ठघ्नी स्यात् प्रोष्ठपदाः पुंस्त्रियोस्सभद्रपदाः ॥ ४१ ॥
अश्विन्यौ वालिन्यावश्वयुजावाश्वकिन्यौ च ।
यथाप्रयोगमेतेषु वचनं स्याद्व्यवस्थितम् ॥ ४२ ॥
अषाढाकृत्तिकाश्लेषामघा भूम्नि स्त्रियश्च ताः ।
फल्गुन्यौ तु द्वित्वभूम्नोर्हस्तश्शतभिषक् च सा ॥ ४३ ॥
अनूराधास्तु पुंभूम्नि शेषं सर्ववचस्स्त्रियाम् ।
वीथ्यो नवैव नक्षत्रैरश्विन्याद्यैस्त्रिभिस्त्रिभिः ॥ ४४ ॥
त्रिवीथिका त्रयो मार्गा दक्षिणोत्तरमध्यमाः ।
उत्तरो देवयानस्स्याद्योगियानस्तु मध्यमः ॥ ४५ ॥
दक्षिणः पितृयाणस्स्यात्तत्राद्या नागवीथिका ।
रोहिण्याद्याजवीथी स्यात्ततस्त्वैरावती परा ॥ ४६ ॥
मार्गोऽयं देवयानाख्यो मघाद्या पुनरार्षभी ।



हस्तादिका तु गोवीथी ततो जारद्गवी परा ॥ ४७ ॥
मार्गोऽयं योगियानाख्यो मूलाद्या गजवीथिका ।
श्रोणाद्या मृगवीथी स्यात्ततो वैश्वानरी परा ॥ ४८ ॥
मार्गोऽयं पितृयाणाख्यस्स्थानान्येषां पथां दिवि ।
ऐरावतं जारद्गवं वैश्वानरमिति क्रमात् ॥ ४९ ॥
सप्तर्षयस्तु खे ताराख्पाश्चित्रशिखण्डिनः ।
ज्योतिषामयनं ज्योतिश्शास्त्रं राशिर्ग्रहाह्वयः ॥ ५० ॥
पूर्वपश्चिमराश्यर्धौ सन्दालबलयौ क्रमात् ।
संज्ञा द्रेक्काणहोराद्याश्शास्त्रे ज्ञेयास्सलिंगकाः ॥ ५१ ॥
कालोऽनेहा च दिष्टश्च स सूक्ष्मस्त्री तुटिस्त्रुटिः ।
द्वे तुटी लघ्वक्षरकस्तौ द्वावक्षरपातकः ॥ ५२ ॥
तौ निमेषो लिप्तिका तु तौ द्वौ काष्ठा तु ता नव ।
ते द्वे लवो लवाः पञ्च कला दश च तद्द्वयम् ॥ ५३ ॥
लेशो लेशाः पञ्चदश क्षणो नाडी तु षट् क्षणाः ।
द्वे तु नाड्यौ मुहूर्तोऽस्त्री घटिका धारिकेति च ॥ ५४ ॥
त्रिंशता तैरहोरात्रः पक्षांगोऽप्यथ वासरः ।
दिवसञ्चास्त्रियौ भानुर्घृणिर्घस्रो रविध्वजः ॥ ५५ ॥
पद्मबन्धुः कोकहितो द्युश्च क्ली स्यादहर्दिनम् ।
रजनी यामिनी याम्या त्रियामा क्षणदा क्षपा ॥ ५६ ॥
तमी तमस्विनी रात्रिर्निशा धारिर्विभावरी ।
तमिस्रा क्षाणिनी क्षाणी शर्वरी वासतेय्युषा ॥ ५७ ॥
निशीथिनी निशीथ्या च ज्यौत्स्नी ज्योतिष्मती निशा ।
पूर्णेन्दुस्तु दिनम्मन्या गर्भकं तु निशाद्वयम् ॥ ५८ ॥
बहूव्यस्तु गणरात्रं च चिररात्रं च रात्रयः ।
पक्षाभ्यामिव याऽहोभ्यां युक्ता सा पक्षिणी निशा ॥ ५९ ॥

तामसी साच्चिकी चित्रा चित्रोपघ्ना च राजसी ।
खण्डिता चेति शर्वर्यः प्रावृडाद्यृतुषु क्रमात् ॥ ६० ॥
या सप्तसप्ततितमे वर्षे मासि च सप्तमे ।
सप्तमी प्राणिनां घोरा रात्रिर्भैमरथी हि सा ॥ ६१ ॥
ध्वान्तन्तिमिरमासक्तं तामिस्रं शार्वरं तमः ।
आततिश्चान्धकारोऽस्त्री तत्तु सन्तमसं यदि ॥ ६२ ॥
परितोऽथावतमसं ल्ध्वन्धतमसं महत् ।
छदो व्यवधिरन्तर्धिर्वरणं चापवारणम् ॥ ६३ ॥
अपिधानतिरोधानपिधानाच्छादनानि च ।
दिनादौ प्राह्णपूर्वाह्णौ ततस्संगतसंगवौ ॥ ६४ ॥
मध्यन्दिनन्तु मध्याह्न उच्छूरस्तु विकालकः ।
सायाह्नोऽप्यपराह्णोऽस्त्री प्रदोषो मैथिलस्समौ ॥ ६५ ॥
सांबाधिकः परस्तस्मान्निशीथस्त्वर्धरात्रकः ।
मध्यरात्रो महारात्र उच्चन्द्रोऽपररात्रकः ॥ ६६ ॥
ब्राह्मोऽप्येते क्रमाद्यामा यामे प्रहरयातुकौ ।
पुण्याहमह्नि पुण्योऽशास्त्रिसंध्यन्तूपवैणवम् ॥ ६७ ॥
विहानोऽस्त्री प्रविसरो गोसर्गप्रत्युषावुषः ।
व्युष्टं विभातं प्रत्यूषं सांयात्रिकमहर्मुखम् ॥ ६८ ॥
काल्यं प्रभातं स्त्री वोषस्सन्धा सन्ध्या पितृप्रसूः ।
तिथिर्न षण् कर्मवाटी प्रतिपच्चैकपक्षतिः ॥ ६९ ॥
पक्षतिश्चाथ पाटूरो भूतेष्टा च चतुर्दशी ।
निपक्षतिर्द्वितीया स्याद्दर्शोऽमावास्यमावसी ॥ ७० ॥
अमावस्याऽप्यमावास्याऽप्यमामस्याऽप्यमामसी ।
सा दृष्टेन्दुस्सिनीवाली नष्टचन्द्रकला कुहूः ॥ ७१ ॥
पित्र्या तु पूर्णिमा चान्द्री चन्द्रमाता निरञ्जना ।



पूर्णा च पूर्णमासी च पौर्णमासी च पूर्णिका ॥ ७२ ॥
चन्द्रे कलोनेऽनुमतिस्सैव राका तु पूरिते ।
पर्वणी पञ्चदश्यौ द्वे पक्षान्तौ नन्दिवर्धनौ ॥ ७३ ॥
आग्रायणी शंकुमूली पौर्णमास्याग्रहायणी ।
पौषी तु महिषी माता माघी स्यादग्निपूर्णिमा ॥ ७४ ॥
फाल्गुनी दाण्डपाता स्याच्चैत्री तु मदनध्वजा ।
विश्वविस्ता तु वैशाखी ज्यैष्ठी तूपनिवेशिनी ॥ ७५ ॥
आषाढी कृत्विमाचारी श्रावणी तु द्विवेदिनी ।
अथ प्रौष्ठपदी गांगी स्यादाश्विन्यवराविला ॥ ७६ ॥
वत्सरान्ता त्वरिश्रेणी धैनुकी चापि कार्त्तिकी ।
मासाख्या कूर्चनक्षत्रयोगश्च गुरुणा यदा ॥ ७७ ॥
महाग्रहायणीत्याद्यास्त एव तिथयः क्रमात् ।
जयंतीत्यादिकास्संज्ञाः पुराणे तिथिषूदिताः ॥ ७८ ॥
पक्षोऽर्धमासः पूर्वस्तु शुक्लाख्योऽन्योऽसिताह्वयः ।
क्षीयमाणतिथिक्षयः पक्षो रिक्तोऽपरस्त्वणिः ॥ ७९ ॥
अणिकूर्चस्त्वमावास्या भूतेष्टा प्रतिपत्क्षयात् ।
मासस्सांवत्सरस्तान्तस्संक्रान्त्या तु स तारणः ॥ ८० ॥
ज्यौतिषः पुनराचारात् सावनो दिनसंख्यया ।
आग्रहायणिको मार्गशीर्षो वर्षमुखस्सहाः ॥ ८१ ॥
सहस्ये स्युस्तैषपौषसैधा माघे तु शानकः ।
शातरश्च तपाश्चाथ द्वौ फाल्गुनिकफाल्गुनौ ॥ ८२ ॥
तपस्ये फल्गुनालश्च चैत्रे मौहनिको मधुः ।
चैत्रिको मन्मथसखो वैशाखो राध उच्छुनः ॥ ८३ ॥
ज्येष्ठामूलीय ईजानो ज्यैष्ठश्च खरकोमलः ।
ते शुक्रे स्युरथाषाढे शुचिश्श्रावणिके नभाः ॥ ८४ ॥

श्रावणश्च नभस्ये तु भाद्रो भाद्रपदोऽपि च ।
अपि प्रौष्ठपदस्तस्मिन्नाश्विनाश्वयुजाविषे ॥ ८५ ॥
कार्त्तिके स्यात् कार्त्तिकिको बाहुलश्शैलकौमुदौ ।
क्लीबेऽप्येषु सकारान्ता ऋतुर्बीजं सतेरकम् ॥ ८६ ॥
हेमन्तः प्रसवो लोध्रश्शैरवस्तु शिशिरोऽस्त्रियाम् ।
मधुर्वसन्तस्सुरभिर्वलांगः पुष्पसारणः ॥ ८७ ॥
पुष्पकालोऽपीध्ममस्त्री ग्रीष्मस्त्वारवोर ऊष्मकः ।
शुचिरुष्णागमः पात्म उष्ण ऊष्माप्यथ क्षरी ॥ ८८ ॥
प्रावृड्वार्षी भूम्नि वर्षाः कालोक्षी च घनागमः ।
घनात्ययश्शरत् स्त्री स्याद्विसर्गो दक्षिणायनम् ॥ ८९ ॥
उत्तरायणमाग्नेयं विषुवान्विषुवोऽस्त्रियौ ।
संवत्सरोऽब्द आग्नेयो वत्सरः परिवत्सरः ॥ ९० ॥
वत्सवायव्यसौर्याश्च वर्षोऽस्त्री स्त्री शरत् समाः ।
कृतं सत्ययुगं सौम्यं त्रेताग्नेयी विसर्जिका ॥ ९१ ॥
द्वापरे यज्ञियाग्नेयौ पुष्यो झर्झरकः कलिः ।
त्रियुगं तु युगासारं द्व्यायोगं तु युगद्वयम् ॥ ९२ ॥
मन्वन्तरं त्वन्तरं स्यात् कल्पभागे चतुर्दशे ।
चतुर्युगसहस्रं तु कल्पस्तद्ब्रह्मणो दिनम् ॥ ९३ ॥
तद्रात्रौ तु महासुप्तिस्समसुप्तिर्जगत्क्षयः ।
महाप्रलयकल्पान्तौ युगांतो भूतसंप्लवः ॥ ९४ ॥
प्रतिसर्गस्तु संहारः प्रलयः प्रतिसञ्चरः ॥ ९४" ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यामन्तरिक्षकाण्डे ज्योतिरध्यायः)

---



मेघाध्यायः

मेघोऽब्दो जलदो नभ्राट् तडित्वाञ्जलमुग्घनः ।
धाराधरो वारिधरो धूमयोनिर्वलाहकः ॥ १ ॥
तडित्पतिः पयोगर्भो नदनुर्मुदिरोंऽबुभृत् ।
कादंबिनी मेघमाला काली कृष्णनवांबुदः ॥ २ ॥
इन्द्रायुधं त्विन्द्रधनुस्तद्दीर्घमृजु रोहितम् ।
ऐरावतं च विद्युत्तु चञ्चला चपला चला ॥ ३ ॥
आकालिकी शतावर्ता जलदा जलपालिका ।
क्षणांशुः क्षणिका चंपा तडिद्दीप्ता शतह्रदा ॥ ४ ॥
सौदामिन्यैरावती च तद्भेदेऽप्यन्तिमत्रयम् ।
गर्जितं स्तनितं शीर्णं वज्रे ह्रादुनयस्स्त्रियः ॥ ५ ॥
वातपातस्तु निर्घातश्चडकोऽप्यशनिर्न षण् ।
स्फूर्जथुर्वज्रनिष्पेषो न स्त्री वज्रोऽशनिर्न षण् ॥ ६ ॥
वर्षोऽस्त्री वर्षणं वृष्टिश्शीकरोऽस्त्र्यंभसः कणः ।
घनोपलस्तु करकः पुञ्जिका मटचीति च ॥ ७ ॥
विप्रुट् स्त्री पृषतो बिन्दुस्स्तोको द्रप्सः पृषन्न पुम् ।
अनावृष्टिरवग्राहो मेघच्छन्नेऽह्नि दुर्दिनम् ॥ ८ ॥
अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।
प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः ॥ ९ ॥
कुहिढोऽस्त्री कुहेलिस्स्त्री कुहेडिर्धूमिका त्रयी ॥ ९" ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां अंतरिक्षकाण्डे मेघाध्यायः)

---

खगाध्यायः

पक्षी पत्त्ररथः पत्त्री पित्सन् पिपतिषन् पतन् ।
पतंगः पतगः प्लावी पतत्र्यंगुपतत्त्रयः ॥ १ ॥
विहंगमो विर्विहगो विहंगो नभसंगमः ।
नीडोद्भवश्शुको नीडी मलूको विप्रुषो भसन् ॥ २ ॥
वशाकुर्मर्दनः पीतुर्मशाको मदुरो द्विजः ।
ऊकश्शकुन्तिश्शकुनिश्शकुन्तश्शकुनः खगः ॥ ३ ॥
शलको विकिरस्तुण्डी नीडजो वातगाम्यपि ।
पक्षिपोतस्तु चिल्लाकश्चंपुकः पीलुकावटौ ॥ ४ ॥
गृह्याश्छेकाश्च गेहेषु संसक्ता मृगपक्षिणः ।
हंसो मरालो नीलाक्षश्चक्रपक्षास्सितच्छदः ॥ ५ ॥
मानसौकाः परिप्लावी वक्रांगो जालपादकः ।
सूतिस्संकुचितश्शंकुर्ज्येष्ठः प्रास्थितधोरणौ ॥ ६ ॥
क्षीराशश्चाप्यसौ राजहंसो रक्तैः पदाननैः ।
मलिनैर्मल्लिकाक्षस्तैर्धार्तराष्ट्रस्सितेतरैः ॥ ७ ॥
कादंबः कलहंसश्च हंस आधूसरच्छदः ।
वरटा हंसकान्ता स्याद्वराला वरलापि च ॥ ८ ॥
हंससाचिः क्षुद्रहंसः क्षयिस्तु कुवलायिकः ।
चक्रवाको रथः कोकश्चक्रश्चक्राह्वयाह्वयः ॥ ९ ॥
बको बकोटः कह्वोऽथ बलाका बिसकण्ठिका ।
बकजातिर्दर्वितुण्डो दर्विः क्रौञ्चश्च दर्विदा ॥ १० ॥
मद्गुस्तु जलकाकस्स्यादातिस्त्वाटिश्शराटिका ।
कारण्डवो महापक्षो जलरंकुस्तु वंजुलः ॥ ११ ॥



दात्यूहश्चाथ शकटाबिले प्लवपरिप्लवौ ।
अन्वर्थनामधेयौ द्वौ जालपादांबुकुक्कुटौ ॥ १२ ॥
कुक्कुटो दीर्घवाग्दक्षशिखी चूलिक आरणी ।
कृकवाकुर्विवृत्ताक्षस्ताम्रचूडशिखण्डिकः ॥ १३ ॥
मयूरश्चटकश्शौण्डः पादायुधनखायुधौ ।
पारावतः कलरवो रक्तदृष्टिर्मदोत्कटः ॥ १४ ॥
काकस्तु ढिक एकाक्षश्चिरजीवी दिवाटनः ।
आत्मघोषो महानेमिः कण्टको मौकलिः कुणः ॥ १५ ॥
बलिपुष्ट उलूकारिर्नाडिजंघोऽप्रहृष्टकः ।
धूलिजंघोऽन्यवापश्च परभृद्वायसोऽन्यपुट् ॥ १६ ॥
द्रोणस्सकृत्प्रजोऽरिष्टो ध्वांक्षः करट इत्यपि ।
कृष्णकाको वृद्धकाक ऐन्द्रिः काकोल आसुरः ॥ १७ ॥
धूंक्ष्णा तु श्वेतकाकोऽथ चटको वर आटकः ।
बलिभुक्कलविंकश्च सेव्यस्तिलककण्टकः ॥ १८ ॥
कलविंकस्त्वसौ पीतमुण्डश्श्यामा तु पोतकी ।
व्याघ्राटस्तु भरद्वाजः क्षिप्रश्श्येनस्सुपर्णकः ॥ १९ ॥
श्येनायां प्राचिका चित्रपक्षे शरुकपिंजलौ ।
वाचाला मुखरा शारिः कोयष्टिश्शिखरी समौ ॥ २० ॥
कुलालकुक्कुटो गर्तकुक्कुटः पेचिका पुनः ।
उलूकचेटी हिक्का स्यात् कनकाक्षी च पिंगला ॥ २१ ॥
उलूकः पेचकः कोण्ठः काकारिर्हरिलोचनः ।
नक्तंचरो घर्घरको निशादर्शी बहुस्वनः ॥ २२ ॥
महापक्षी च कृष्णोऽसौ नक्तकः कृतमालकः ।
कपोतो बालवत्सस्स्यात् खञ्जरीटस्तु खञ्जनः ॥ २३ ॥

मिथुनी चञ्चलश्चाथ सुप्तोऽस्मिन् कृष्णवक्षसि ।
गोलत्तिका खंजरीटी शार्ङ्गः कीशा च पिप्पिका ॥ २४ ॥
शुकस्त्रिकेतुर्मेधावी श्रीमान् वाग्मी फलाशनः ।
दरणो दण्डिकीरौ च लोपालोपायिके समे ॥ २५ ॥
पात्रं तु कुण्डृणाची स्त्री कण्ठपालस्तु वञ्जुलः ।
काकपुष्टस्त्वन्यभृतस्ताम्राक्षः कोकिलः पिकः ॥ २६ ॥
वसन्तघोषो मधुवाक्कलकण्ठो वनप्रियः ।
भृंगः कलिंगो धूम्राटो राजभृंगस्तु बुद्धिमान् ॥ २७ ॥
मान्धीरो वाग्गुदस्तुल्यस्स तु मान्धीलवो महान् ।
आतापी चिल्लिकोऽथ स्यात् स्वस्तिकः पुष्टिवर्धनः ॥ २८ ॥
किकिदीविस्स्वर्णचूडश्चाषो राजविहंगमः ।
मणिकण्ठश्चित्रवाजो विशोकः पूर्णकूटकः ॥ २९ ॥
गृध्रस्तु पुरुषव्याघ्रो दूरदर्शी सुदर्शनः ।
दाक्षाय्यश्चाप्यथ श्येनो वर्तुलाक्षश्शशादनः ॥ ३० ॥
कंकस्तु कर्कटस्कंधः पर्कटः कमलच्छदः ।
दीर्घपादः प्रियापत्यो लोहपृष्ठश्च मल्लकः ॥ ३१ ॥
पूर्णकूटे कुटपुरिश्शकुन्ते भासकुक्कुटौ ।
चातकस्त्वंबुजोऽनंबुः पौरेन्द्रस्स्तोककः खगः ॥ ३२ ॥
सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः ।
दार्वाघाटे शतपत्रो लक्ष्मणा सारसप्रिया ॥ ३३ ॥
क्रौञ्चस्तु क्रुङ्ङथोत्क्रोशः कुररो मत्स्यनाशनः ।
टिट्टिभस्तु कटुक्काण उत्पादशयनोऽण्डुकः ॥ ३४ ॥
तित्तिरिस्तु खरक्काणो वरिष्ठश्चेश्वरप्रियः ।
चकोरस्तु चलच्चञ्चुरुत्पिबश्चन्द्रिकाप्रियः ॥ ३५ ॥



कृकरे त्वर्थ्यकृकणौ दात्यूहे कालकण्ठकः ।
मयूरो बर्हिणो बर्ही शुक्लापांगश्शिखावलः ॥ ३६ ॥
वर्षामदश्शिखी केकी शिखण्डी चित्रपत्रकः ।
भुजंगारिश्शापटिको मयूकश्चित्रपिंगलः ॥ ३७ ॥
मार्जारकण्ठः केकालिर्विष्किरो नर्तनप्रियः ।
मेघनादानुलासी च दार्वण्डश्चन्द्रकीति च ॥ ३८ ॥
शब्दोऽस्य केका बर्हस्तु प्रचलाककलापकौ ।
शिखण्डः पिञ्छमप्यस्य मेचको बर्हचन्द्रकः ॥ ३९ ॥
पक्षिभेदाः खिलिखिलश्रीकर्णीयकवर्तकाः ।
लावकुक्कुटहारीतजीवञ्जीवादयोऽपि च ॥ ४० ॥
हंसादयो जलचरा ग्राम्यास्स्युः कुक्कुटादयः ।
वनजाः पीतमुण्डाद्या भृंगाद्याः क्षुद्रपक्षिणः ॥ ४१ ॥
भृंगे भ्रमरभृंगाणमधुलिण्मधुपालिनः ।
अलिर्द्विरेफो लोलंबो भसलः पुष्पलोलुपः ॥ ४२ ॥
इन्दिन्दिरो मधुकरश्चञ्चरीको मधुव्रतः ।
शित्पुटष्षट्पदश्चाथ पतंगश्शलभस्समौ ॥ ४३ ॥
जतुकाजिनपत्रा स्यात् परोष्णी तैलपायिका ।
मलिम्लुचास्तु मशका भंभराली तु मक्षिका ॥ ४४ ॥
चर्वणा मक्षिका नीला सरघा मधुमक्षिका ।
अरण्यमक्षिका दंशो दंशी तज्जातिरल्पिका ॥ ४५ ॥
कषायिका तु जलजा घोणा कुंभीरमक्षिका ।
गण्डोली वरटा न क्ली गृहिणी गृहकारिका ॥ ४६ ॥
अन्वर्थाख्या कोष्ठकारी कण्टका कण्टकानना ।
निशामणिर्ध्वान्तमणिः खद्योतो ज्योतिरिंगणः ॥ ४७ ॥

भृंगारी झीरिका चीरी झिल्लिकाथ ह्रुषिः पुमान् ।
पुत्तिका च पतंगी च पूत्यण्डाः क्षुद्रपक्षिणः ॥ ४८ ॥
छदः पक्षो गरुद्वाजश्छदनं च तनूरुहम् ।
पतत्रं च कुलायस्तु पञ्जरं नीडमस्त्रियाम् ॥ ४९ ॥
पेशी कोशश्च डिंबोऽण्डं त्रोटिश्चंचुस्सृपाटिका ।
डयनं गतिरुड्डीनसंडीनादि विशेषकम् ॥ ५० ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां
वैजयन्त्यां अन्तरिक्षकाण्डे खगाध्यायः)

---



### शब्दाध्यायः

शब्दो व्योमगुणस्वानस्वननिस्वाननिस्वनाः ।
निर्ह्रादो रवणो नादः क्ष्वेडो ध्वानो ध्वनिः कवः ॥ १ ॥
कणिर्ह्रादो रसो ध्रूणा घोषो गुंजनमुंजने ।
गंजनं मशनं कानं गानं कोरणरेभणे ॥ २ ॥
कूजनं कूजितं गर्जा न क्लीबे गर्जना न ना ।
क्रोश उच्चस्वने प्राणिस्वने त्वाराव आरवः ॥ ३ ॥
रवो विरावस्संरावो रुतं चेत्यथ वाशनम् ।
वाशितं च तिरश्चां स्याद्ध्वांक्षी स्त्री घोरवाशितम् ॥ ४ ॥
घोरितं तुरगादीनां नासापुटभवे ध्वनौ ।
तंदनं रंभणं रंभा रंभितं च गवां ध्वनिः ॥ ५ ॥
बुक्कनं श्ववृकध्वाने भषणं भषितं शुनः ।
वृकस्य रेषणं रेषा हेषा ह्रेषा च वाजिनाम् ॥ ६ ॥
बृंहितं करिणां शब्दो राणोऽस्त्री मणितं रतेः ।
काकुस्स्त्री भिन्नकण्ठोत्थश्शोककोपादिवैकृतात् ॥ ७ ॥
डक्कनं हात्कृते पत्रवस्त्रादीनां तु मर्मरः ।
पर्दनं गुदजे शब्दे कर्दनं कुक्षिकूजिते ॥ ८ ॥
विष्फारो धनुषस्स्वानो भूषादीनां तु शिंजितम् ।
प्रणादस्त्वनुरागोत्थश्चित्कृतं स्यंदनध्वनौ ॥ ९ ॥
स्रोतसां खरको युद्धध्वाने क्रंदनयोधने ।
मार्जना मुरजध्वाने गुंदिलो मद्दलध्वनौ ॥ १० ॥
वाणं हुडुक्कहिक्कायां भेरीनादे तु टट्टरः ।
क्वणनं क्वणितं क्वाणो निक्वाणो निक्वणः क्वणः ॥ ११ ॥

वीणायाः क्वणतेः प्रादेः प्रक्वाणप्रक्वणादयः ।
स्त्री प्रतिश्रुत् प्रतिध्वाने तुमुलो व्याकुले भृशम् ॥ १२ ॥
गंभीरे मन्द्र उच्चे तु तारो रम्यास्फुटे कलः ।
समाहितस्तु निर्दोषवर्णे दोषयुताः परे ॥ १३ ॥
अत्युच्चारणगर्वेण पीडितोऽपि समाहितः ।
एणीकृतः प्रतिध्वानदंतुरो माहिषश्च सः ॥ १४ ॥
कल्हस्तु गलमूलस्थो गद्गदस्स मनाक्स्फुटः ।
लालको बालानुकृतौ लल्लरो जिह्वया हतः ॥ १५ ॥
शिथिलोऽस्पष्टसंयोगस्तुंबुकस्सानुनासिकः ।
सांत्वं स्यान्मधुरं वाक्यं स्यादवाच्यमनक्षरम् ॥ १६ ॥
अनिर्बद्धं तूच्चावचमक्लिष्टार्थं तु संकुलम् ।
अनृते वितथालीकावाहतं तु मृषार्थके ॥ १७ ॥
अंबूकृतं सनिष्ठीवं स्यादबद्धमनर्थकम् ।
कल्या तु वाचि कल्याण्यां रुशती तद्विपर्यये ॥ १८ ॥
छलवाक् तु निरानन्दा शोकभारे तु तीरिता ।
क्रोधगर्भा तु वैद्योता दैन्यगर्भा तु नश्वरी ॥ १९ ॥
निर्वेदगर्भा निस्संगा स्नेहगर्भा तु मालुकी ।
विरहे खंडिता मोहे शून्या लोभे तु जांगली ॥ २० ॥
निष्ठुरा परुषा क्षेपे त्रिषु स्युस्तुमुलादयः ।
अस्त्रियौ वर्णमर्णं च वाक्यं तु वचनं वचः ॥ २१ ॥
आम्रेडितं द्विस्त्रिरुक्तं गुणितं घोषितं समे ।
अरणिर्ना मुहुः प्रोक्तमनुलापश्च वर्तनम् ॥ २२ ॥
संभाषणं त्वाभाषणमालापः कुरुकुंचिका ।
उपसंभाषणं सान्त्रि तत्तूपच्छंदनं यदि ॥ २३ ॥



धनादि स्यात् प्रतिज्ञातं गुह्ये तदुपमंत्रणम् ।
विभाषणं विवादे स्यादनुवादोऽनुभाषणम् ॥ २४ ॥
आख्यायनी तु सन्देशो दिष्टं संवदनं च तत् ।
संवादनं वाचिकं च वलना त्वतिचाटुवाक् ॥ २५ ॥
लुंजना पिंजना चेति सूत्रिते वचनद्वयम् ।
भंजना स्याद्विवरणे पोटना तूत्कटं वचः ॥ २६ ॥
कोलाहलः कलकलः कुंजनाऽस्मिन्नपक्रुधि ।
चर्चरी चर्भटिस्तुल्ये रथ्यावादे तु कोहलम् ॥ २७ ॥
उद्घूमस्तु कौरकव्या विगर्वा गर्वहारिका ।
लोचना तु विचारोक्तिर्लोठिना सानुसारवाक् ॥ २८ ॥
विप्रलापो विरोधोक्तिस्संलापो भाषणं मिथः ।
काक्वा वर्णनमुल्लापो विलापः परिदेवनम् ॥ २९ ॥
प्रलापोऽनर्थकं वाक्यमपलापस्त्वपह्नवः ।
अपव्ययोऽप्यवज्ञापि हूतिस्त्वाकारणा हवः ॥ ३० ॥
हक्कारामंत्रणाह्वानं संहूतिर्बहुभिः कृता ।
अभिधानं नामधेयं नामाख्याह्वाभिधाह्वयः ॥ ३१ ॥
मिथ्याभियोगोऽभिख्यानमभिशापोऽभिशंसनम् ।
शापोऽधिक्षेप आक्रोशः परिवादोऽप्यवर्णवत् ॥ ३२ ॥
अवर्णवादो निर्वादोऽप्यपवादो विरूक्षणम् ।
क्षारणं गर्हणं निन्दा जुगुप्सागालिकुत्सनाः ॥ ३३ ॥
जनवादस्तु वचनं भर्त्सनं प्रतितर्जनम् ।
आक्षारणं निधुवनमाक्रोशो मैथुनं प्रति ॥ ३४ ॥
उत्प्रासस्स्यादुपालंभः परिवाग्भाषणीति च ।
श्लाघा शंसा प्रशंसा च स्तवस्स्तोत्रं स्तुतिर्नुतिः ॥ ३५ ॥

यशो जयोदाहरणं साधुवादो गुणावली ।
ख्यातिः कीर्तिस्समज्ञा च संदेशगिरि वाचिकम् ॥ ३६ ॥
अर्थवादः परार्थोक्तिः प्रश्नः पर्यनुयोगवत् ।
अनुयोगश्च पृच्छा च प्रतिवाक्यं तदुत्तरम् ॥ ३७ ॥
कथा त्वाख्यायिकाख्यानं पुराणं पंचलक्षणम् ।
इतिहासः पुरावृत्तमैतिह्यमितिहाव्ययम् ॥ ३८ ॥
वार्तोदन्तोऽपि वृत्तान्तः किंवदन्ती जनश्रुतिः ।
प्रवल्हिका प्रहेलिका प्रजल्पनं बहूदितम् ॥ ३९ ॥
विकल्पना पृथक्क्रियावधारणान्यनिह्नुतिः ।
समस्या तु समासस्स्यात् संक्षेपस्स्यादविस्तरः ॥ ४० ॥
उपोद्घात उदाहार उपन्यासः पुरोवचः ।
प्रस्तावः पुनरुद्घातस्सोऽधिकार उपक्रमः ॥ ४१ ॥
गद्यपद्यमयी चंपूस्सारणी पद्यमात्रिका ।
शृंगाराद्यधिकं काव्यं समासाढ्यं तु दंडकम् ॥ ४२ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यामन्तरिक्षकाण्डे शब्दाध्यायः)

---

(अन्तरिक्षकाण्डस्समाप्तः)

---



## अथ भूमिकाण्डः

### देशाध्यायः

भूमिरुर्वी घनश्रेणी स्थगणा गिरिकर्णिका ।
क्षोणी सर्पभृता दक्षा कुः क्ष्मा क्षान्तिः क्षमा क्षरिः ॥ १ ॥
धरित्री धरणी धात्री भूतधात्री धरा स्थिरा ।
वसुंधरा वसुमती वसुधा विपुला रसा ॥ २ ॥
ग्मा विश्वा पृथिवी पृथ्वी हेमा सर्वंसहा मही ।
अब्धिवस्त्रा नगाधारा मेदिनीला गिरिस्तनी ॥ ३ ॥
अचला कीलिनी पेरा बीजसूरत्नसूस्त्वसूः ।
रत्नगर्भा काश्यपी भूः कुहूर्यवनिरुर्वरा ॥ ४ ॥
द्यावापृथिव्यावेकोक्तौ रोदस्यौ रोदसी इति ।
नाभीदं भारतं वर्षं हिमाद्रेस्तच्च दक्षिणम् ॥ ५ ॥
तेन हैमवतं नाम पराण्यप्येवमुन्नयेत् ।
हैमकूटं किंपुरुषं हरिवर्षं तु नैषधम् ॥ ६ ॥
इलावृतं सौमेरवं सुमेरुं परितो हि तत् ।
भद्राश्वं तु ततः पूर्वं केतुमालं तु पश्चिमम् ॥ ७ ॥
वर्षावेतौ क्रमात् पूर्वगंधिकापरगंधिकौ ।
उदक् तु रम्यकं नैलं नीलाद्रेरुत्तरं हि तत् ॥ ८ ॥
ततो हिरण्मयं श्वैतं तच्च श्वेताद्रेरुदक् ।
कुरुवर्षं शार्ङ्गवतं कुरवश्च त उत्तराः ॥ ९ ॥
जंबूद्वीपः कुमारी स्याद्यत्रेमे भारतादयः ।
लावणो लवणोदस्स्याद्येनासौ वेष्टितोऽब्धिना ॥ १० ॥
इक्षुद्वीपादयोऽप्येवं वृता इक्षूदकादिभिः ।

मन्थोदधिस्तु क्षीराब्धिः क्षीरोदः कलशोदधिः ॥ ११ ॥
अथाप्यन्येऽन्तरद्वीपा भारतात् सप्त दक्षिणाः ।
एको वैद्युत्वतो नाम विद्युत्वान् यत्र पर्वतः ॥ १२ ॥
मालं मैनं व्रतं जालं नारासंगे पराणि षट् ।
अनुद्वीपाश्च षट् तेषामंगद्वीपादयो यथा ॥ १३ ॥
अंगद्वीपं यवद्वीपं मलयद्वीपमित्यपि ।
शंखद्वीपं कुशद्वीपं वराहद्वीपमित्यपि ॥ १४ ॥
अंगद्वीपं चाक्रगिरं मध्येपश्चिमवारिधि ।
पूर्वाब्धौ तु यवद्वीपं यत्र कालोदकोऽर्णवः ॥ १५ ॥
मलयद्वीपमब्धौ स्याद्दक्षिणे तच्च दार्द्दरम् ।
मालयं माहामलयं तत्पार्श्वे तु चतुर्थकम् ॥ १६ ॥
अतः पूर्वं कुशद्वीपं चंपकद्वीपमप्यदः ।
यतः पुरो रक्तवहो लोहित्यो नाम वारिधिः ॥ १७ ॥
अथ प्रतीच्यां वाराहं वराहद्वीपमायतम् ।
यत्र यज्ञवराहोऽसौ हरिरद्यापि तिष्ठति ॥ १८ ॥
बर्हिणं सिंहलं हेमकुड्यं द्वारवतीपदम् ।
पारसीककुलं स्वर्णद्वीपं वैद्युतमार्षभम् ॥ १९ ॥
अयोमुखं तार्णसौमं स्यात्तार्णं ग्रामणीकुलम् ।
इत्याद्या भारते वर्षे क्षुद्रा द्वीपास्सहस्रशः ॥ २० ॥
नीवृज्जनपदो देशस्तद्भेदाः पुंसि भूम्नि च ।
स्त्रियो वरेन्द्रीस्रावस्तीराढाद्या नैव भूमनि ॥ २१ ॥
प्राग्दक्षिणश्शरावत्याः प्राच्योऽस्याः पश्चिमोत्तरः ।
उदीच्यो मध्यदेशस्तु देशो यो मध्यमस्तयोः ॥ २२ ॥
आर्यावर्तो ब्रह्मवेदिर्मध्यं विन्ध्यहिमागयोः ।



अथोदीच्या जनपदास्तत्र चीनाः खरंभराः ॥ २३ ॥
गांधारास्तु दिहण्डास्स्युर्यवनास्तु हुरुष्कराः ।
संभालाः स्युश्शूरसेना अपि ते शूरसेनयः ॥ २४ ॥
मद्धचे तु शूरसेनानां मधुरा नाम वै पुरी ।
लंपाकास्तु मुरुण्डाः स्युस्तोक्षारास्तु युगालिकाः ॥ २५ ॥
जालंधरास्त्रिगर्तास्स्युर्होलास्स्युः खरटी स्त्रियाम् ।
प्रत्यग्रथास्त्वहिच्छत्रास्तैतुलास्तु कालिंगकाः ॥ २६ ॥
टर्कवाहीककाश्मीरतुरुष्केषु ससिन्धुषु ।
बाह्लीका वाह्लिकाः कीराश्शाखयो दारदाः क्रमात् ॥ २७ ॥
कुमालकास्तु सौवीरा यौधेयास्तु नृगालिकाः ।
अप्यन्ये पारदाः किञ्जाः कुल्या इत्यादिनीवृतः ॥ २८ ॥
अथ प्राच्या जनपदास्तत्र मुद्गरकाः कुजाः ।
प्राग्ज्योतिषाः कामरूपास्तथा प्राग्जालिका अपि ॥ २९ ॥
विदेहास्तीरभुक्तिस्स्त्री स्रावस्ती तु पुरंजकाः ।
राढा तु सुह्माः पुण्ड्रास्तु वरेंद्री पुण्ड्रलक्षणा ॥ ३० ॥
भौरिकास्स्युस्समतटा अंगाश्चंपोपलक्षणाः ।
वंगास्तु हरिकेलीया मगधाः कीकटास्स्मृताः ॥ ३१ ॥
अप्यन्येऽन्ध्रा व्रतास्साल्वा इत्याद्या नीवृतः पृथक् ।
विन्ध्यात्तु दक्षिणा देशा दक्षिणापथसंज्ञिताः ॥ ३२ ॥
तत्र पाण्ड्याः पांडियास्स्युः कुन्तलास्तूपहालकाः ।
चोलास्स्युरुत्पलावर्ता महाराष्ट्रास्तु दण्डकाः ॥ ३३ ॥
अप्यन्ये केरलाः कुल्यास्सेतुजाः कुलकालकाः ।
इषीकाश्शबरारट्टा इत्याद्या नीवृतः पृथक् ॥ ३४ ॥
अपरांतास्तु पाश्चात्यास्ते च सूर्यारकादयः ।

अथेमे मलदाद्याख्या विन्ध्यपर्यन्तवासिनः ॥ ३५ ॥
तत्र स्युर्मलदाः स्थौराः करूशास्तु बृहद्गृहाः ।
त्रैपुरास्तु हहालास्स्युश्चैद्यास्ते चेदयश्च ते ॥ ३६ ॥
दशार्णास्स्युर्वैदिपरा मालवास्स्युरवन्तयः ।
अप्यन्ये मेकला भोजाः कोसलाद्याश्च नीवृतः ॥ ३७ ॥
अथ देशा मध्यदेशे मरवस्तु दशेरकाः ।
साल्वास्तु कारकुत्सीयास्तेषां त्ववयवाः परे ॥ ३८ ॥
उदुंबरास्तिलखला महाकारा युगंधराः ।
हुलिंगाश्शरदंडाश्च षट् साल्वावयवा इमे ॥ ३९ ॥
अप्यन्ये कुन्तलाः कुल्याः कलिंगाः काशिकोसलाः ।
मेकलाः कुसटास्सैरा जांगलाः पृथवा वृकाः ॥ ४० ॥
पटच्चरादयश्चान्ये मध्यदेशस्य नीवृतः ।
उक्तानामन्तरालेषु बहवः क्षुद्रनीवृतः ॥ ४१ ॥
मरवः पुंसि धन्वान आसारी तु स्थली स्थलम् ।
कचंगला तु नीलिंगी भूर्नानाजंतुसंयुता ॥ ४२ ॥
पंकिलः पंकवान् देशो वेतस्वान् बहुवेतसः ।
शाद्वलश्शादहरितः कुमुद्वान् कुमुदाधिकः ॥ ४३ ॥
सनलो नड्वलो नड्वाञ्छार्करश्शर्कराधिकः ।
देशश्शर्करिलोऽप्येवमुन्नेयौ सिकतावति ॥ ४४ ॥
कृष्णभूमः पाण्डुभूमः कृष्णा पाण्डुश्च यत्र मृत् ।
अनूपस्सांबुरन्यस्तु जांगलश्शून्य उज्जटः ॥ ४५ ॥
स्फुटिते सारणारष्टौ राजन्वांस्तु सुराजनि ।
अन्यत्र राजवान् वृष्टिजीवनो देवमातृकः ॥ ४६ ॥
स्यान्नदीमातृको देशो नद्यम्बूत्पाद्यसस्यकः ।



पद्यः पदांकयोग्यस्स्यात्त्रिष्वेते पंकिलादयः ॥ ४७ ॥
श्मशानं स्यात् पितृवनं स्त्रीवासः क्रिमिपर्वतः ।
शतमूर्धा वामलूरो नाकुर्वल्मीकमस्त्रियाम् ॥ ४८ ॥
मार्गोऽध्वा पदवी पंथाः पद्या चैकपदी सृतिः ।
सुपंथा अतिपंथाश्च सत्पथश्च शुभे पथि ॥ ४९ ॥
विपथः कापथो व्यध्वो दुरध्वश्च कदध्वनि ।
अपंथास्त्वपथं दूरशून्ये प्रान्तरमध्वनि ॥ ५० ॥
वृतिमार्गस्त्वर्धपदः प्राग्वंशः पदिकोऽपि च ।
संक्रमस्तित्तिरिस्तुल्यौ शृंगाटं तु चतुष्पथः ॥ ५१ ॥
जंघापदं चतुष्पादस्त्रिपादस्तु गृहान्तरम् ।
अंगुलोऽस्त्री यवा अष्टौ समस्तु चतुरंगुलः ॥ ५२ ॥
धनुर्ग्रहश्च दिष्टिश्च स्यातामष्टांगुलावुभौ ।
दशांगुलः क्रकचिको वितस्तिर्द्वादशांगुला ॥ ५३ ॥
किष्कुस्स्यादवटो हस्तश्चतुर्विंशतिरंगुलाः ।
बद्धेन मुष्टिना हस्तस्स्याद्रत्निर्मुष्टिको वसुः ॥ ५४ ॥
अरत्निर्निष्कनिष्ठोऽसौ स प्रजापतिहस्तकः ।
कुत्सश्चाप्यथवाकुत्सस्सधनुर्मुष्टिरेव सः ॥ ५५ ॥
अथ वर्धकिहस्तस्स्याद्द्विचत्वारिंशदंगुलः ।
तस्मिन्विकिष्कुः क्रकचः किष्कुः क्राकचिकोऽपि च ॥ ५६ ॥
हस्तद्वयं तु सक्तिष्कुर्हस्तत्रयमलीमकम् ।
चतुर्हस्तो धनुर्दण्डो धनुर्धन्वंतरं युगम् ॥ ५७ ॥
ऐश्वरं नालिका चाथ पंचहस्तोऽर्धहस्तकः ।
अष्टहस्ता तु रज्जुस्स्यान्नवहस्ता तु नालिका ॥ ५८ ॥
दशहस्तः पितृनल्वो दीर्घदंडो निदेशकः ।

स प्रावेशनिकश्चाथ परिवेषो द्विरज्जुकः ॥ ५९ ॥
निवर्तनं तु तिसृभीरज्जुभिर्बलिशं च तत् ।
नल्विकः किष्कुभिष्षष्ट्या नल्वः किष्कुचतुश्शतम् ॥ ६० ॥
दशधन्वंतरं स्तोमो दशस्तोमस्तु वंशिकः ।
दशवंशिक आनाहो दशानाहो नलांतरः ॥ ६१ ॥
धन्वंतरसहस्रं तु क्रोशो गव्या तु तद्द्वयम् ।
स्त्री गव्यूतिश्च गव्यूतं गोरुतं गोमतं च तत् ॥ ६२ ॥
गव्यूतानि तु चत्वारि योजना कोसलादिषु ।
गव्यूतिद्वयमेव स्याद्योजनं मगधादिषु ॥ ६३ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायाम्
वैजयन्त्यां भूमिकाण्डे देशाध्यायः)

---



## शैलाध्यायः

शैलोऽगः पर्वतः क्ष्माभृत् सानुमान् दुर्गमो गिरिः ।
अहार्यगोत्रकुट्टीरकुट्टारा भूधरोऽचलः ॥ १ ॥
बन्धाकिः फलिकः कुध्रः प्रपात्यद्रिशिलोच्चयः ।
सुवेलस्स्याच्चित्रकूटस्त्रिकूटस्त्रिककुच्च सः ॥ २ ॥
लोकालोकश्चक्रवालो लोकांताद्रिः पराचलः ।
मलये त्रिकलाषाढौ विन्ध्यस्तु जलवालकः ॥ ३ ॥
हिरण्यनाभो मैनाकस्सुदारुः पारियात्रकः ।
माल्यवांस्तु प्रस्रवणो हिमवांस्तु हिमाचलः ॥ ४ ॥
रजताद्रिस्तु कैलासो हराद्रिर्महितश्च सः ।
वेंकटो वृषभस्सिंहः केसरः केशवप्रियः ॥ ५ ॥
उदयस्तूदयाद्रिस्स्यादस्तस्त्वस्तमयाचलः ।
दरी गुहा कन्दरोऽस्त्री प्रपातस्तु तटो भृगुः ॥ ६ ॥
उत्सः प्रस्रवणं तोयप्रवाहे झरनिर्झरौ ।
स्नुर्वप्रोऽस्त्री सानुरस्त्री पादाः पर्यंतपर्वताः ॥ ७ ॥
कूटोऽस्त्री शिखरं शृंगं नितंबः कटकोऽस्त्रियाम् ।
पाषाण उपलोऽश्मा च प्रस्तरश्च शिला दृषत् ॥ ८ ॥
गंडशैलास्तु पाषाणास्स्थूलाः प्रगलिता गिरेः ।
उपत्यका त्वधोभूमिर्गिरेरूर्ध्वमधित्यका ॥ ९ ॥
कुडङ्गोऽस्त्री निकुञ्जोऽस्त्री कुञ्जो वृक्षवृतान्तरे ।
आकरस्स्त्री खनिर्गञ्जा रुमा तु लवणाकरः ॥ १० ॥
गैरिकं पीतधातुस्स्यात् कुनटी तु मनःशिला ।
रोचनी रञ्जनी हृद्या रसनेत्री महासना ॥ ११ ॥

करवीरा कला विद्युन्नागमाता विगन्धिका ।
शिला मनोऽभिधा काला नागजिह्वा च तास्समाः ॥ १२ ॥
शुक्लधातौ पाकशुक्ला कठिनी कक्खटी खटी ।
हरितालं तु खर्जूरं पिञ्जरं नटभूषणम् ॥ १३ ॥
तालमालं वंशपत्रं पीतनं रोमहृद्वरम् ।
सौगन्धिकस्तु पामारिः पीतो गन्धाश्मगन्धकौ ॥ १४ ॥
बोलो गोलश्शशः पिण्डः प्राणो गन्धरसो रसः ।
अभ्रकं व्योममेघाख्यं चक्रसंज्ञं तु माक्षिकम् ॥ १५ ॥
शिलाजतु तु गैरेयमर्थ्यमश्मजमद्रिजम् ।
सौराष्ट्री पार्वती काक्षी कालिका पर्पटी सती ॥ १६ ॥
आढकी तुवरी काली भूनामा च मृदाह्वया ।
सुराष्ट्रजाप्यथो गोला नैपाली कुनटीति च ॥ १७ ॥
रुक्मं कार्तस्वरं स्वर्णं महारजतमौजसम् ।
चामीकरं जातरूपं तपनीयं शिलोद्भवम् ॥ १८ ॥
लोभनं कनकं शुक्रं सुवर्णं चन्द्रकाञ्चने ।
दाक्षायणं श्रीमकुटं गारुडं तारजीवनम् ॥ १९ ॥
अग्निबीजं रत्नवरं गैरिकं हेम कर्बुरम् ।
जाम्बूनदं शातकुम्भं हाटकं भूरिरस्त्रियौ ॥ २० ॥
वैणवं कर्णिकाराभं वेणूतटजकाञ्चनम् ।
सुवर्णद्वीपजाः स्वर्णशुक्तिकाभ्रकसन्निभाः ॥ २१ ॥
रसविद्धं तु देवार्हं पवित्रं वज्रधारणम् ।
अलंकारसुवर्णं तु शृंगीकनकमाशु च ॥ २२ ॥
रूप्यहेम्री तु संश्लिष्टे घनगोलकमस्त्रियाम् ।
रजतं त्रापुषं रूप्यं चन्द्रभीरु यवीयसम् ॥ २३ ॥



सौधं सुभीरुकं शुभ्रं खर्जूरं वंगजीवनम् ।
ताम्रं शुल्बं मर्कटास्यं रक्तं व्यष्टं कनीयसम् ॥ २४ ॥
म्लेच्छं वरिष्ठं म्लेच्छास्यं श्रेष्ठं काम्यमुदुंबरम् ।
रिरी तु रीतिरुत्साहा पीतलोहं सुलोहकम् ॥ २५ ॥
लोह्यमप्यारकूटोऽस्त्री पित्तलं त्वारमस्त्रियाम् ।
राजरीत्यां ब्रह्मरीतिस्स्वर्णरीतिर्महेश्वरी ॥ २६ ॥
काञ्चनी कपिला राज्ञी ब्राह्मणी कपिलोहकम् ।
मीलिकायां तु सरटी निष्ठुरं दारुकण्टकम् ॥ २७ ॥
गुरुज्येष्ठं सिंहमलं पञ्चलोहान्यलोहके ।
कांस्यं तु कृत्रिमं नाद्यं प्रभासमसुराह्वयम् ॥ २८ ॥
घण्टास्वनं भूरिलोहं रवणं लोहजं मलम् ।
सौराष्ट्रं चाथ सीसोऽस्त्री योगेष्टं भुजगाह्वयम् ॥ २९ ॥
यवनेष्टं समोलूकं हेमघ्नं भूतलोद्भवम् ।
त्रपु नागं चीनपट्टं रङ्गमप्यथ पिच्छटम् ॥ ३० ॥
रङ्गं वङ्गं त्रपु क्षोभ्यं मृद्वङ्गं नागजीवनम् ।
परासं सिंहलं ज्येष्ठं वक्राख्यं मुखभूषणम् ॥ ३१ ॥
कस्तीरं शोभनं नागमरिजं हेमजं शठम् ।
गुरुपत्रं तमरकं घनं सलवणं रजः ॥ ३२ ॥
अयः कृष्णायसं चीनं शस्त्राख्यं विषमायुधम् ।
धीवरं धीमकं लोहं लौहकालद्रढानि च ॥ ३३ ॥
स्त्री कुटिर्ना पारशवो गिरिसारोऽश्मसारकः ।
अथ कालायसं तीक्ष्णं सुलोहं रूक्षमासुरम् ॥ ३४ ॥
वैक्रन्तस्स्याद्रसवरो रसज्ञो व्योमधारणः ।
रसकस्त्वयसस्सारो विकारो लोहजः कुशी ॥ ३५ ॥

धूर्तमण्डूरसिंहाणविष्ठाख्यानि त्वयोमले ।
लोहं तु तैजसं सर्वं वसु रत्नं मणिर्न षण् ॥ ३६ ॥
स्फटिकोऽर्को रविग्रावा सूर्यकान्तोऽनलोपलः ।
चन्द्रकान्तश्चन्द्रमणिस्सुसामोऽथ त्वयोमणिः ॥ ३७ ॥
अयस्कान्तस्तद्विशेषाश्चुम्बकभ्रामकादयः ।
गारुत्मतं मरकतमश्मगर्भं हरिन्मणिः ॥ ३८ ॥
शोणरत्नं लोहितकं पद्मरागोऽरुणोपलः ।
विद्रुमो ना प्रवालोऽस्त्री वज्रोऽस्त्री हीरकः पुमान् ॥ ३९ ॥
इन्द्रनीलं महानीलं वैडूर्यं वालवायजम् ।
कुरुविन्दास्तु कुल्माषा रत्नभेदास्तु मौक्तिकम् ॥ ४० ॥
माणिक्यं पौष्यकं शंखः पुलको विमलादयः ।
रसाञ्जनं तार्क्ष्यशैलं शैलेयं रसगर्भकम् ॥ ४१ ॥
स्रोतोऽञ्जनं तु सौवीरं कपोताञ्जनयामुने ।
तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके ॥ ४२ ॥
रीतिपुष्पं पुष्पकेतुः पौष्पकं कुसुमाञ्जनम् ।
तुत्थं तु दार्विका क्वाथसम्भवं कर्परीति च ॥ ४३ ॥
कुलुत्थिका तु चक्षुष्या कुम्भकारी कुलालिका ।
रसस्तु पारतस्सूतो हिंगुलो दारदो रसः ॥ ४४ ॥
हिंगुलं हंसपादं च कुरुविन्दं च के चन । ॥ ४४" ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
भूमिकाण्डे शैलाध्यायः)

---



## वनाध्यायः

अटवी काटिकाऽरण्यं विपिनं काननं वनम् ।
कक्ष्यकं कुन्दिलं वार्क्षं वनी गहनमित्यपि ॥ १ ॥
महाटवी त्वरण्यानी प्रस्तारस्तु तृणाटवी ।
कृत्रिमं वनमारामोऽपवनोपवने अपि ॥ २ ॥
तदेव राज्ञ उद्यानमाक्रीडश्चाथ तस्य तत् ।
सान्तःपुरस्य प्रमदावनं गेहस्य निष्कुटः ॥ ३ ॥
पुष्पवाटी त्वमात्यादेस्त्रयी वाटी फलाय चेत् ।
वृक्षो द्रुमो भूरुहो द्रुर्विटपी विष्टरोऽध्रिपः ॥ ४ ॥
अनोकहो नगो भूरुट् तरुश्शाखी कुठः कुजः ।
वसुः करालिकोऽगच्छो जर्णो रूक्षः पुलाक्यपि ॥ ५ ॥
वानस्पत्यः पुष्पफली फली त्वेव वनस्पतिः ।
ओषधिः फलपाकान्ता ह्रस्वशाखाशिफः क्षुपः ॥ ६ ॥
अप्रकाण्डे स्तंबगुल्मावुलपस्तु प्रतानिनी ।
गुल्मिन्यपि च वल्ली तु व्रततिर्व्रतती लता ॥ ७ ॥
वन्ध्यो वृक्षोऽवकेशी स्यादवन्ध्यस्तु फलेग्रहिः ।
पुष्पितस्स्यात् कुसुमितः फलितः फलिनः फली ॥ ८ ॥
फुल्ले प्रफुल्लसम्फुल्लव्याकोचविकचस्फुटाः ।
उत्फुल्लोन्मिषितोन्निद्रा उद्बुद्धोन्मीलितस्मिताः ॥ ९ ॥
फलमामं शलाटुस्स्याद्वानं शुष्कतरं फलम् ।
त्रिषु वन्ध्यादयोऽथ स्यादंकुरोंकूरमस्त्रियौ ॥ १० ॥
प्ररोहश्चाथ वंशस्स्याद्योऽकुरः पर्वसूत्थितः ।
परुः पर्व पुमान् ग्रंथिर्निर्यासः खपुरो लशः ॥ ११ ॥

शिफा जटाऽवरोहस्तु सा शाखाजा वटादिषु ।
मूलं बुध्नोऽङ्घ्रिनामास्मादास्कन्धात् स्यात् प्रकाण्डकम् ॥ १२ ॥
स दारुमात्रस्स्थाण्वस्त्री दारु काष्ठमथ त्रयी ।
छल्ली त्वक् स्त्री त्वचा न क्ली वल्कलं चोलकोऽस्त्रियौ ॥ १३ ॥
चोचं वल्कं च सारस्तु मज्जा स्रावः किनाटकम् ।
निष्कुटः कोटरो न स्त्री विदलं दारु पाटितम् ॥ १४ ॥
स्कन्धः प्रघाणोऽथ शिखा शाखाथ शिखरं शिरः ।
स्कन्धशाखा तु शाला स्यात् प्रवालः पल्लवांकुरः ॥ १५ ॥
विस्तारो विटपस्स्तम्ब उच्छ्रायस्तु समुन्नतिः ।
छदस्तु छदनं पत्रं पलाशं पतनं दलम् ॥ १६ ॥
पर्णं बर्हं पतत्रं च त्रयी शुङ्गास्य कोशिका ।
पल्लवोऽस्त्री किसलयं किसलोऽपि नवे दले ॥ १७ ॥
पत्रमध्यसिरा माढिः पुष्पोऽस्त्री कुसुमं सुमम् ।
मणीचकं प्रसूनं च सूनं सुमनसस्स्त्रियः ॥ १८ ॥
मकरन्दो मरन्दोऽस्य रसे जालं तु जालकम् ।
कलिका कोरकश्चाथ कुट्मलो मुकुलोऽस्त्रियौ ॥ १९ ॥
गुच्छो गुलुच्छस्स्तबको मञ्ज्यां मंजरिवल्लरी ।
प्रसवः पिप्पलं सस्यं फलं वृन्तं तु बन्धनम् ॥ २० ॥
षण्डास्त्वाम्रादयश्शब्दा आम्रादिफलपुष्पयोः ।
हरीतक्यादिकं स्त्री स्यादश्वत्थादिफले पुनः ॥ २१ ॥
आश्वत्थमैंगुदं प्लाक्षं नैयग्रोधं च बार्हतम् ।
वैणवं शैग्रवं चाथ जम्बूः स्त्री जम्बु जांबवम् ॥ २२ ॥
जात्यादयस्त्वलिङ्गास्स्युः पुष्पार्थे व्रीहयः फले ।
विदार्याद्यास्तु मूलेऽपि पाटला कुसुमे न ना ॥ २३ ॥



सप्तम्यन्तपदारम्भाः पर्याया इह कुत्र चित् ।
सप्तम्यन्तं च पुंलिङ्गं विज्ञेयं संशये सति ॥ २४ ॥
आम्रे कामाङ्गमाकन्दौ चूतो वेलोऽङ्गनाप्रियः ।
करको वलयश्चाथ श्रेष्ठेऽत्र सहकारकः ॥ २५ ॥
अथ श्यामलके लाला लवली लावली फला ।
केसरे वकुलो मद्यलालसस्सिंहकेसरः ॥ २६ ॥
द्राक्षाफलो गुडश्चाथ न्यग्रोधो बहुपाद्वटः ।
श्रीवृक्षे पिप्पलोऽश्वत्थः प्लक्षश्चलदलोऽगुलः ॥ २७ ॥
उदुम्बरे प्राणिफलो मशकी हेमदुग्धकः ।
प्लक्षस्तु पर्कटिजटिकलापिगिरिलक्ष्मणाः ॥ २८ ॥
पलाशे किंशुकः पर्णो वातपोथस्त्रिपर्णकः ।
आस्फोतो ब्रह्मवृक्षश्च हस्तिकर्णदले कृती ॥ २९ ॥
बिल्वे मालूरमङ्गल्यौ श्रीफलो गोहरीतकी ।
परिव्याधे बालभीरुर्भीरुबालोऽम्बुवेतसः ॥ ३० ॥
शीतेऽभ्रपुष्पो वानीरो वञ्जुलो वेतसो रथः ।
विदुले प्रिय आम्राते द्वौ पीतनकपीतनौ ॥ ३१ ॥
कपित्थे स्युर्दधिफलो दधित्थग्राहिमन्मथाः ।
हृद्यो दन्तशठः पुष्पफलोऽरिष्टे तु फेनिलः ॥ ३२ ॥
मातुलुंगे तु रुचको वराम्लः केसरी शठः ।
वीजपूरे मातुलुंगो लुंगस्सुफलपूरकौ ॥ ३३ ॥
देविकायां महाशल्का दूष्यांगी मधुकुक्कुटी ।
अथात्यम्ला मातुलुंगी पूतिपुष्पी वृकाम्लिका ॥ ३४ ॥
छागे तु करुणो लक्षो मल्लिकाकुसुमप्रियः ।
जम्बीरे जम्भको दन्तशठो जम्भीरजम्भलौ ॥ ३५ ॥

नागरंगे तु नारंगो नार्यंगस्तक्रवासनः ।
त्वग्गन्ध एलको योगी मुचुलिन्दे तु निम्नकः ॥ ३६ ॥
न्युब्जे कर्मफलो भव्यः कर्मरंगश्शठेश्वरौ ।
महीपतिर्दन्तशठः कर्ता नेता च कर्म च ॥ ३७ ॥
विकंकते ग्रन्थिलस्स्याद्व्याघ्रपाच्च मधुच्छदः ।
सर्जेऽश्वकर्णस्साले तु कार्ष्यकस्सस्यसंवरः ॥ ३८ ॥
पीतसाले गौरसर्जप्रियकासनपीवराः ।
रक्तपुष्पोऽप्यथो सिन्धुसर्जे बाणः खरोऽर्जुनः ॥ ३९ ॥
रोहिते रौहिषो रोही रक्तो रौहितकोऽपि च ।
स्त्रीप्रिये वञ्जुलोऽशोकः कंकेलिः कर्णपूरकः ॥ ४० ॥
हेमपुष्पोऽप्यथांकोले निचोलोऽकोटशोधनौ ।
रसाले वरणस्सेतुस्तिक्तशाकोऽश्मरीरिपुः ॥ ४१ ॥
दोषग्रहे तु कतको द्रावणस्त्रवणस्सरः ।
उच्छेखनीयो लक्ष्मीवांस्तेरस्तोयप्रसादनः ॥ ४२ ॥
राजादने फलाध्यक्षः प्रियकश्च मधुस्रवः ।
मधुपुष्पे मधुष्ठीलो वानप्रस्थो मधूकवत् ॥ ४३ ॥
गुडपुष्पोऽप्यद्रिजेऽस्मिन् गौरशाको मधूलकः ।
पारिभद्रस्य भेदे च मन्दारः पारिजातकः ॥ ४४ ॥
भूर्जपत्रे भुजो भूर्जो मृदुत्वक् चर्मिचर्मिकौ ।
पीलौ गुडफलस्स्रंसी श्यामश्चाथात्र शैलजे ॥ ४५ ॥
अक्षोडः कर्परालश्च नेमीये त्वतिमुक्तकः ।
चित्रकृत् तिमिशो नेमी वञ्जुलोऽथायुगच्छदे ॥ ४६ ॥
सप्तपर्णो विशालत्वक्छारदो विषमच्छदः ।
कोविदारे चमरिको रक्तपुष्पो युगच्छदः ॥ ४७ ॥



काञ्चनारोऽप्यार्ग्वधे तु व्याघातश्चतुरंगुलः ।
आरग्वध आरेवतश्शम्याकः प्रग्रहोऽर्ग्वधः ॥ ४८ ॥
कृतमालस्सुपर्णश्च मदने तु फणी रसः ।
पिण्डीतके मरुवक इक्ष्वाकुर्गालवामनौ ॥ ४९ ॥
विचुलः पिचुलो राढः कैडर्यो विषपुष्पकः ।
काकर्दश्छर्दनश्चीनो गरलः कण्टकीति च ॥ ५० ॥
कालस्कन्धे तिन्दुकोऽक्षी स्फूर्जकश्शितिसारकः ।
काकेन्दौ काकपीलुस्स्यात् कुलकः काकतिन्दुकः ॥ ५१ ॥
सिते लोध्रे महालोध्रश्शवरश्चाथ लोहिते ।
तिरीटो मार्जनश्चिल्वः कृष्णेऽस्मिन् लोध्रगालवौ ॥ ५२ ॥
गुग्गुलौ कालनिर्यासो देवधूपो महेश्वरः ।
श्रीमान् स्निग्धस्सर्वसहश्श्लेष्मी तिक्तः कटुर्लघुः ॥ ५३ ॥
कामः पुरो जटायुश्च कुंभोलूखलकं वरम् ।
रज्जुदाले नीचुदारः कच्छूदारो गृहद्रुमः ॥ ५४ ॥
गूढवृक्षश्श्लेष्मफलो विषघ्नो द्विजकुत्सितः ।
उद्दालो बहुवारो ना सेलुश्श्लेष्मातकी न षण् ॥ ५५ ॥
शोभाञ्जने तीक्ष्णगन्धश्शिग्रुः काक्षीवमोचकौ ।
उष्णो मुरुंगी रक्तेऽस्मिन् मधुशिग्रुस्सुभञ्जनः ॥ ५६ ॥
गृञ्जनस्स्वादुगन्धा च प्रियालुस्तु धनुः पटः ।
कार्ष्मर्ये गोपभद्रा स्यात् कार्ष्मरी कृष्णवृन्तिका ॥ ५७ ॥
श्रीपर्णी कुमुदा गृष्टिर्गम्भारी भद्रपर्णिका ।
कैडर्ये कट्फलः कुम्भी श्रीपर्णी कुमुदेति च ॥ ५८ ॥
सुपार्श्वे स्यात् कन्दरालो गर्दभाण्डः कपीतनः ।
ताम्रपाकी फलेपाकी ञ्लक्षको गन्धमुण्डकः ॥ ५९ ॥

कदम्बे पुलकी श्रीमान् प्रावृषेण्यो हलीमकः ।
महाकदम्बके नीपो धूर्तो धूर्तारदीपनौ ॥ ६० ॥
वासन्ते स्यात् कुरवकस्तिलकः कुवको मधुः ।
शुक्लपुष्पः कुरवको मदनो धूर्तनागरौ ॥ ६१ ॥
करञ्जे स्यान्नक्तमालः प्रकीर्यश्चिरिबिल्वकः ।
कालिंगे पूतिकरजः पूतिके कलिकारकः ॥ ६२ ॥
बालपत्रे तिक्तसारः खदिरो दन्तधावनः ।
सिते तु तस्मिन् कदरश्शल्यकश्च मरुन्धवः ॥ ६३ ॥
मरूद्भवे विट्खदिरोऽप्यरिमोऽप्यरिमेदकः ।
कण्टकी चाप्यथैरण्डे हस्तपर्णोऽप्यलम्बकः ॥ ६४ ॥
रुवुः पञ्चांगुलश्चञ्चुरामण्डस्तरुणोऽम्बुकः ।
गन्धर्वहस्तो रुवुको वातघ्नो व्याघ्रपुच्छकः ॥ ६५ ॥
प्रियके तु प्रियंग्वाख्या कारम्भा फलिनी फली ।
विष्वक्सेना बला वृन्ता गुन्द्रा गोवन्दिनी लता ॥ ६६ ॥
भावज्ञा सर्षपी स्त्र्याख्या वृत्ताङ्गी सुयमावनी ।
कन्या चापि कदम्बस्तु निचुलोऽम्बुज इज्जलः ॥ ६७ ॥
स्योनाके शोणकट्वांगौ दीर्घवृन्तः कुटन्नटः ।
मण्डूकपर्णः पत्रोर्णो भल्लूकश्शुकनासकः ॥ ६८ ॥
भूतपुष्पो नटो ढंक ऋक्षष्टुण्डुक आरलुः ।
तिलके पललः श्रीमान् सुगन्धो मुखमण्डनः ॥ ६९ ॥
कर्णपूरोऽल्पपुष्पश्च पुन्नागे सुरवल्लभः ।
किंदिरे दीनकंबोजौ तद्भेदे सुरपर्णिका ॥ ७० ॥
पारिभद्रे द्रुकिलिमं देवदारु सुराह्वयम् ।
पूतिकाष्ठं भद्रदारु पीतदारु च दारु च ॥ ७१ ॥



वृक्षोत्पले कर्णिकारः परिव्याधोऽथ भण्डिले ।
कपीतनश्शिरीषश्च करके दाडिमी त्रयी ॥ ७२ ॥
कुटजे कुटचो वत्सश्शक्राख्यो गिरिमल्लिका ।
एतस्यैवास्त्रियाविन्द्रयवभद्रयवौ फले ॥ ७३ ॥
पनसे कण्टकिफलः पयोऽण्डो जघनेफलः ।
कर्कशी मधुबीजश्च सरले पूतिकाष्ठकम् ॥ ७४ ॥
निंबे पार्वतकैडर्यद्वेषिच्छर्दनमाथिकाः ।
रोमशः पिचुमन्दश्च लकुचे लिकुचो डहुः ॥ ७५ ॥
पिचुले झावुकश्शाके पृथुच्छदहलीमकौ ।
उन्मत्ते धूर्तधुत्तूरधुस्तूरकितवाश्शठः ॥ ७६ ॥
धुर्धूरः काञ्चनाह्वोऽथ त्रिपुरे मदमत्तकः ।
प्रेतालये तु तित्तीकश्शाखोटो गण्डमालहा ॥ ७७ ॥
कुसरे भीरुमार्जारकिंशुका इंगुदी न षण् ।
पिण्डारके तु पिण्डीकः कृष्णे त्वस्मिन् बलाहकः ॥ ७८ ॥
पुत्रजीवे त्वक्षफलो रुद्राक्षे तु महामुनिः ।
एकास्ये त्वत्र माभीदो द्विमुखे तु वरार्गलः ॥ ७९ ॥
चतुर्मुखे ब्रह्मसंज्ञः पंचवक्त्रे हराह्वयः ।
षण्मुखे तु गुहाख्योऽथ किंपाके काकमर्दकः ॥ ८० ॥
तिंतृडीकेऽम्लिका चिञ्चा शुक्तिर्नारी कपिप्रिया ।
तिंत्रिणी चाप्यथो हेमपुष्पे चांपेयचंपकौ ॥ ८१ ॥
हरणश्शीतलः कांतः कमनीयः पचंपचः ।
ह्रीने त्वंजिः कुंभफलश्चांपेयो नागकेसरः ॥ ८२ ॥
करमर्दे वशश्चोलः कृष्णपाकफलैः पदैः ।
व्यस्तैस्समस्तैर्युग्मैश्च पुंसि पंचदशाभिधाः ॥ ८३ ॥

सुषेणो विग्नकोऽप्यल्पफलेऽस्मिन् करमर्दिका ।
वन्दाके वृक्षको वन्दा जीवन्त्यपदरोहिणी ॥ ८४ ॥
वृक्षादनी वृक्षरुहा सेव्यास्मिन् क्षीरवृक्षजे ।
तनुस्तुष्टो जयः कान्तः कुणिः कातुलको द्रुमः ॥ ८५ ॥
अग्निमन्थे हविर्मन्थोऽप्यरणिः पावको वशा ।
गणिकार्यप्यथो देवताडे वेणी खरागरी ॥ ८६ ॥
कालस्कंधे तमालोऽस्त्री तापिंछे काकतुंडिका ।
बदर्यां कुवली कोलिः कूली क्रूरा तिरीटिका ॥ ८७ ॥
लताकोलौ तु खलुकी गिरिकोलौ तु सौरसा ।
हस्तिकोलौ महाघोण्टा गोपघोण्टा महाफला ॥ ८८ ॥
जलकोलौ तु संगाली नरकोलौ तु कर्कशी ।
सृगालकोलौ हिंस्राथ शमी सकुफला जया ॥ ८९ ॥
काचस्थाल्यां कुबेराक्षी कृष्णवृन्ता फलेरुहा ।
आमोघा पाटलिर्न स्त्री पूरण्यां शल्मलिर्न षण् ॥ ९० ॥
काष्ठीला तूलिनी तूलफलाथ कूटशाल्मलौ ।
रोचनश्शिंशपायां तु तीक्ष्णधूमावसादनी ॥ ९१ ॥
कपिला पिच्छिला भस्मगर्भा मण्डलपत्रिका ।
जंब्वां त्रिसारा विरजा महाजंब्वां महाफला ॥ ९२ ॥
सुरसाथो राजजंब्वां सुफलस्सुरभिच्छदः ।
काकजंब्वां तु मेवाभश्शिवेष्टश्शीतपल्लवः ॥ ९३ ॥
जंबूटनीलजंबूटौ शफर्यां श्लक्ष्णपत्रकः ।
शिखीन्द्राश्मन्तकाम्लोटा धवे गौरधुरंधरौ ॥ ९४ ॥
भल्लातक्यां त्रिलिंगायामग्निमुख्यप्यरुष्करः ।
कंपिल्ले रोचनी गुण्डा रक्तांगश्चन्द्रकर्कशौ ॥ ९५ ॥



सल्लक्यां सुरभिर्हस्तिप्रिया हस्त्यशना ध्रुवा ।
वैजयन्त्यां तु तर्कारी नादेयी च जयन्त्यपि ॥ ९६ ॥
धातक्यामनलज्वाला सुभिक्षा धातृपुष्पिका ।
स्नुह्यां समन्तदुग्धा स्नुग्वज्रा नन्दासिपत्रिका ॥ ९७ ॥
सिहुण्डस्सिन्धुरप्यस्यां विपत्रायां त्रिकण्टकः ।
वज्री गण्डर्यथो घण्टारवायां शणपुष्पिका ॥ ९८ ॥
तुण्डिकेर्यां रवा शीरा केसरा बदराफला ।
कार्पास्यक्ल्यत्र वन्यायां भारद्वाज्यपि कुष्ठनुत् ॥ ९९ ॥
विषघ्न्यां भञ्जिका भार्ङ्गी विष्ठा ब्राह्मणयष्टिका ।
ब्रह्मदण्डी च पद्मा च सारपर्ण्यां स्थिरा ध्रुवा ॥ १०० ॥
कोकिलाक्षस्तु काण्डेक्षुरिक्षुरः क्षुरकः क्षुरः ।
वासके त्वाटरूषस्स्यात् सिंहास्यो वाजिदंतकः ॥ १०१ ॥
वाशा सिंही वैद्यमाता वार्ताक्यां दुष्प्रधर्षिणी ।
वार्तिंगनस्तु भण्डाकी वार्ताकुर्हिंगुलुस्त्रियाम् ॥ १०२ ॥
गोष्ठवार्तिंगने त्वेला परुका जलजंबुका ।
हस्तिवार्तिंगने त्विभ्या विशाला दद्रुनाशिनी ॥ १०३ ॥
बृहत्यां प्रसहा काली वार्ताकी हिंगुदी कुली ।
लताबृहत्यां सुस्निग्धा धन्या प्रसहनी लता ॥ १०४ ॥
निदिग्धिकायां संधानी महासन्धा गिरिप्रिया ।
कण्टकाल्यां परिक्रूरा कुल्या कुल्यस्पृशी वरा ॥ १०५ ॥
दुस्स्पर्शा राष्ट्रिका सिंही कण्टकाली निदिग्धिका ।
दण्डोत्पले सहा देवा तलपोटे प्रमेहनुत् ॥ १०६ ॥
हयपुच्छी तु कांबोजी माषपर्णी महासहा ।
मार्कवे भृंगराजस्स्यात् पर्पणस्तु श्वपामनः ॥ १०७ ॥

कालमेष्यां कृष्णफला वागूजी वसुवल्लिका ।
सोमवल्ली पूतिफली सोमराजिरवल्गुजः ॥ १०८ ॥
परित्राण्यां त्रायमाणा त्रायन्ती बलभद्रिका ।
रेवत्यां रामदूती स्याद्वारुणी नागदन्त्यपि ॥ १०९ ॥
श्रीफल्यां क्लीतकी नीली नीलकेशी महारसा ।
ग्रामीणा रञ्जनी तुत्था कारवाही च नीलिनी ॥ ११० ॥
फल्गुः काकोदुंबरिका बलयूर्जघनेफला ।
दास्यां षडश्रा शार्ङ्गेष्ठा काकजंघा विलोमिका ॥ १११ ॥
काकनासा तु काकांगी जीवनीया शिरोरुहा ।
तृड्घ्न्यां वयस्या काकोली काकमाची तु वायसी ॥ ११२ ॥
प्रत्यक्छ्रेण्यां सुतश्रेणी द्रवन्ती शंबरी वृषा ।
चित्रोपचित्रा न्यग्रोधी रण्डा मूषिकपर्ण्यपि ॥ ११३ ॥
देव्यां मूर्वा धनुश्रेणी गोकर्णी पीलुपर्णिका ।
मधूलिका तिक्तवल्का पीलुनी तेजनी स्रुवा ॥ ११४ ॥
प्रत्यक्पर्णी तु शिखरी किणिही खरमञ्जरी ।
अपामार्गश्शैखरिको धामार्गवमयूरकौ ॥ ११५ ॥
अजशृंग्यां विषाणी स्याद्गोजिह्वादार्विके समे ।
शंखिनी चोरपुष्पी स्यात् केशिनी चाप्यथो लघुः ॥ ११६ ॥
वर्षा लंकायिका स्पृक्का मरुन्माला लता मरुत् ।
कच्छूरके द्राविडकः काल्यको वेधमुख्यकः ॥ ११७ ॥
निर्गुण्ड्यामिन्द्रसुरसस्सिन्दुवारश्च सिन्दुकः ।
कुठेरके तु पर्णासो मालोर्जरकठिञ्जरौ ॥ ११८ ॥
सितेऽस्मिन् मञ्जरी तीक्ष्णस्तीक्ष्णगन्धोऽर्जकोऽत्र तु ।
सुगन्धौ श्वेतसुरसा भारती तुलसी शिवा ॥ ११९ ॥



अल्पपत्रस्तु जंबीरः फणिर्जकसमीरणौ ।
अस्मिन् सुगन्धौ सौवासो मञ्जरीकमयूरकौ ॥ १२० ॥
तीक्ष्णे तीक्ष्णार्जको गौरी भूतघ्नी देवदुंदुभिः ।
अल्पमात्रे तु वैकुण्ठो विल्वगन्धो वचाच्छदः ॥ १२१ ॥
कालपर्ण्यां तु सुरभिः करालः कालमालकः ।
मालो ब्रह्मजटायां तु सलज्जं दानवांजनम् ॥ १२२ ॥
पुण्डरीकं दमनकं कान्तं दान्तं मुनिः पुमान् ।
विष्णुक्रान्ता तु सुमुखी गवसी स्यान्महारसा ॥ १२३ ॥
ऋषणी द्रोणिका छत्रा चक्षुष्या द्रोणपुष्पिका ।
सूर्यावर्ते पर्णिकायां मोरटा मूलपुष्पिका ॥ १२४ ॥
मुण्ड्यां मुण्डितिका मुण्डा श्रमणी श्रामणी बुधा ।
रोदन्यां कच्छुरानन्ता ताम्रमूला दुरालभा ॥ १२५ ॥
यासो यवासो दुस्स्पर्शो धन्वयासः कुनाशकः ।
वृश्चिकाल्यामुष्ट्रधूम्रपुच्छिका नागदन्तिका ॥ १२६ ॥
सर्पदंष्ट्रचमरा काली विषघ्नी वृश्चिकच्छदा ।
वाट्यपुष्प्यां बला वाट्या सम्मासा चान्नसंज्ञिका ॥ १२७ ॥
वाट्यालोऽतिबलायां तु पुष्पवीर्या जनी सहा ।
अश्वकन्दस्त्वश्वगन्धी तिक्ते तु कटुपर्पटौ ॥ १२८ ॥
ऋषभी त्वजहाध्यण्डा कण्डूरा प्रावृषायणी ।
कपिकच्छूश्शूकशिबिरात्मगुप्ता च कच्छुरा ॥ १२९ ॥
अस्थिमांस्त्वस्थिसंघातोऽप्यस्थिसन्नहनोऽपि च ।
एकाष्ठीला पापचेली स्थापनी वनतिक्तिका ॥ १३० ॥
पाठांबष्ठा विद्धकर्णी प्राचीना श्रेयसी रसा ।
गुडूच्यां कुण्डली धीरा छन्ना च्छिन्नरुहा धरा ॥ १३१ ॥

वत्सादनी सोमवल्ली विशल्या चक्रलक्षणा ।
जीवन्ती खरुहा देवी विषघ्न्यमृतवल्लिका ॥ १३२ ॥
दीर्घवल्ल्यां वेत्रवन्यौ कुरुवेत्रश्च भूरदः ।
गवाक्ष्यां किणिही जैत्री प्रत्यक्छ्रेण्यपराजिता ॥ १३३ ॥
विष्णुक्रान्ता परास्फोताश्वखुरी शीतलात्र तु ।
श्वेतायां चारिणी सूर्या गिरिकर्णी गवादिनी ॥ १३४ ॥
नीलायां तु महाश्वेता निष्क्रांता स्थूलपुष्पिका ।
जिंग्यां समंगा विकसा मंजिष्ठांजनवल्लिका ॥ १३५ ॥
पृश्निपर्ण्यां पृथक्पर्णी लांगूली पदपर्णिका ।
गुहा कलशिधावन्यौ दीर्घा सा चित्रपर्णिका ॥ १३६ ॥
सिंहपुच्छी फेरुविन्ना चित्रांघ्रिः क्रोष्टुमेखला ।
नागर्यां केशिका त्र्यश्रा त्रिपुटा त्रिपुटी त्रिवृत् ॥ १३७ ॥
रेचनी महती श्वासा माया कुठरुणात्र तु ।
कृष्णायां रोचनी श्यामा काला चित्रा सुषेण्यपि ॥ १३८ ॥
गोपा तु शारिवा भद्रा नागजिह्वा सुगन्धिका ।
ज्योतिष्मत्यां पीतरसा लगणा कटभींगुदी ॥ १३९ ॥
पारावतपदी पिण्या जीवन्ती स्फुटवल्कली ।
नागवल्ली तु तांबूली तथा तांबूलवल्लिका ॥ १४० ॥
क्षुरे तु कण्टकिफलस्त्रीगोभ्यां कण्टकः परः ।
गोक्षुरस्स्थलशृंगाट इक्षुगन्धा पलंकषा ॥ १४१ ॥
श्वदंष्ट्रा भीरुपर्ण्यां तु शतमूली शतावरी ।
इन्दीवरी बहुसुताप्यहेरुः पीवरीति च ॥ १४२ ॥
सुदर्शनायां चक्रांका दध्याली वृषपर्ण्यपि ।
जीवन्त्यां जीवनी जीवा जीवनीया मधुश्च सा ॥ १४३ ॥



चर्मपर्ण्यां तु शार्ङ्गेष्ठा सुताह्वायामुपोदिका ।
ब्रह्मचर्यां सत्यवनी ब्राह्मी मत्स्याक्षी सोमवल्लरी ॥ १४४ ॥
मण्डूकपर्ण्यां भण्डीरी भाण्डी योजनवल्ल्यपि ।
शोभघ्न्यां पूरणा पूरी वर्षाभ्वी जीवबोधिनी ॥ १४५ ॥
पुनर्नवा च रक्तायां तस्यां योग्या कठिल्लका ।
श्वेतायां वृश्चिकोऽल्पायां दीर्घपत्री विटाटिका ॥ १४६ ॥
अस्या जात्यंतरे स्वल्पे पूरणी हस्तिपूरणी ।
तुण्डिकेर्यां रक्तफला बिंबोष्ठी पीलुपर्ण्यपि ॥ १४७ ॥
लज्जालुस्तु नमस्कारी बदर्यञ्जलिकारिका ।
गण्डकाली खदर्यां तु लज्जालुस्स्याच्छमीफला ॥ १४८ ॥
कलंब्यां शतपर्वा स्यात् कलंबूर्वायसी वधा ।
पटुश्चिकायां तु शिवश्शान्तस्स्वस्तिककुक्कुटौ ॥ १४९ ॥
निद्रालुः करुणो मानी वनालुस्सुनिषण्णकः ।
मारिषे जीवशाकस्स्यादत्राल्पे तण्डुलीयकः ॥ १५० ॥
मेघनादो विगण्डीरमथ स्युर्देवमारिषे ।
विभाजनो रसोत्सृष्टौ काणमारिष ओलकः ॥ १५१ ॥
लतामारिषतुवरौ वरशाकोलताटिकाः ।
जलजोऽसौ चञ्चटकः कुकुण्डे कवकोऽस्त्रियाम् ॥ १५२ ॥
भूवल्लूरमहिच्छत्रं भूस्फोटं भूमिकन्दरम् ।
छत्राकश्च सिलिन्ध्रश्च मुकुलेऽस्मिन् पलाण्डुकम् ॥ १५३ ॥
सृगालवास्तुके त्वारुर्वास्तुके क्षारपत्रकः ।
प्रवालो वीरशाकश्च श्रूषायां कासमर्दकः ॥ १५४ ॥
हरिपर्णे मूलकोऽस्त्री सेकिमं बुस्तिका न षण् ।
नीलकण्ठोऽथ मरुजे शिवं चाणक्यमूलकम् ॥ १५५ ॥

मत्स्याक्ष्यां शालशालीनौ पत्तूरो लोहमारकः ।
अगस्त्ये मुनिमार्जारावगस्तिर्वंगसेनकः ॥ १५६ ॥
शुकनासोऽप्यथो पश्चात्सुन्दरो ग्रीष्मसुन्दरः ।
कपित्थपर्ण्यधःपुष्पी व्रणघ्नी झरसी झरा ॥ १५७ ॥
प्रपुन्नाटे त्वेडगजो दद्रुघ्नश्चक्रमर्दनः ।
घोषे कोशफला घण्टा घण्टाला फलिनी फली ॥ १५८ ॥
जाली पटोली झण्डाली कोशातक्यपि चात्र तु ।
पृथौ महाकोशातकी मृदंगः कृतवेधनः ॥ १५९ ॥
ज्योत्स्न्यां स्वल्पफला ग्राम्या मृदंगः कृतवेधनः ।
अथ जिंगी दीर्घफला मागधी मलनोत्तमा ॥ १६० ॥
बहुजाल्यां कोशफला वन्या तिक्तपटोलिका ।
कर्कोटिक्यां कोशफला राजकोशातकी फला ॥ १६१ ॥
महाजाली पीतघोषा क्षोडो धामार्गवोऽपि च ।
हस्तिघोषे तरंगोऽल्पे त्वादाली देवदाल्यपि ॥ १६२ ॥
चांगेर्यां चुक्रिका दन्तशठांबष्ठाम्ललोण्यपि ।
सुषव्यां तिक्तच्छदनः कारवेल्लः कटिल्लकः ॥ १६३ ॥
राजवल्ल्युरुवल्ल्यंबुवल्ली रञ्जनवल्ल्यपि ।
सुगन्धके तु कर्कोटः किलासघ्नः पटुच्छदः ॥ १६४ ॥
बृहत्कर्कोटके त्वैहो हस्तिकर्कोटको बली ।
पटोलके तु राजीवान् रवणः कर्कशः पटुः ॥ १६५ ॥
राजी राजामृतापाण्डुभूतेभ्यश्च फलः परः ।
तिक्ते राजपटोलश्च भीरुस्त्विर्वारुकर्कटी ॥ १६६ ॥
चोदन्युर्वारुवालुक्योऽप्यल्पा सा राजकर्कटिः ।
तुंब्यां पिण्डफलालाबूः कटुतुंब्यां नृपात्मजा ॥ १६७ ॥



इक्ष्वाकुर्वासनी निम्ना वृन्ततुंब्यां तु तुंबुका ।
अल्पतुंब्यां कुक्कुटाक्षो वृन्ते कर्कारुचित्रलौ ॥ १६८ ॥
कालिंगोऽल्पेऽत्र चेल्लाणचेन्नालौ क्रोष्टुकर्कटिः ।
कालिंग्यां छत्रकस्सोमः कर्कारुर्घनवासकः ॥ १६९ ॥
कूश्माण्डकः पुष्यफलः पीतपुष्पो नृपात्मजः ।
महाफला शाकफला सुभद्रा शंकुलापि च ॥ १७० ॥
सुखवासे शीर्णवृन्त उग्रगन्धस्सुवासकः ।
त्रिलिंगे त्रपुषे तालुश्छर्दनी हस्तिपर्णिनी ॥ १७१ ॥
चिङ्गिटे पुनरुर्वारुर्मृगाद्यां गजचिङ्गिटा ।
विटंकोऽतिमृगेर्वारुर्विशालेन्द्रीन्द्रवारुणी ॥ १७२ ॥
अथो गवाक्ष्यां गोडुंबा चित्रा च कदले पुनः ।
वृषा वारबुसा रंभा काष्ठीलानंशुमत्फला ॥ १७३ ॥
कदली दीर्घपर्णी च रंभा सा गौरपर्णिका ।
कृष्णा तु लंपा कदली माहेन्द्री तु बृहत्फला ॥ १७४ ॥
सुगन्ध्यल्पफला मोचा साष्ठी काष्ठी कदल्यसौ ।
विभीतकस्त्रिलिंगस्स्यात्कलिस्तिष्यः कलिद्रुमः ॥ १७५ ॥
विभीदकः कर्षफलो भूतवासो बहेटकः ।
दैत्यः पापस्तुषः कल्पः कालेयस्तुमुलाक्षकः ॥ १७६ ॥
संवर्तश्च षडश्रायां त्रिलिंग्यामलकी शिवा ।
धात्री कर्षफला तिष्या सेव्याध्यण्डा झटा दृढा ॥ १७७ ॥
हरीतक्यां शुक्रसृष्टा नन्दिनी साधिकाभया ।
अव्यथा चेतकी पथ्या धारणी कालकूणिका ॥ १७८ ॥
गुंजायां कृष्णला ताम्रा शार्ङ्गेष्ठा रक्तिका वरा ।
चूडामणिः कपिक्रोडा कालवृन्ती परा नव ॥ १७९ ॥

काकशब्दात् पीलुपीथ्यौ चिचाणन्त्यदनी नखी ।
जंघा तिक्ता च दक्षा च सा शुक्ला चेन्मधुस्रवा ॥ १८० ॥
द्राक्षायां कृष्णिका स्वाद्वी प्रियाला कालमेषिका ।
हारभूरा दारुफला मृद्वीका गोस्तनी रसा ॥ १८१ ॥
मालत्यां रेवती जातिर्यूथिकायां मनोज्वला ।
मानवी चात्र पीतायां वासन्ती हेमपुष्पिका ॥ १८२ ॥
मल्लिकायां विचकिलो भूपदी मुक्तबन्धना ।
शतभीरुर्मदयन्ती गवाक्षी तृणशून्यकम् ॥ १८३ ॥
देवमाल्यां वरारोहा गोधामाल्यां तु सेवनी ।
सुरूपायां तृणं वेश्यं काकमाल्यां वनोद्भवा ॥ १८४ ॥
आस्फोता चैकपटलमाल्यां बालाथ रक्तकः ।
बन्धूको बन्धुजीवश्च सप्तलायां विभावनी ॥ १८५ ॥
सुगन्धा ग्रैष्मिकाताना मालिका नवमालिका ।
शेफालिका तु निर्गुण्डी नीलिका निवहात्र तु ॥ १८६ ॥
सितायां श्वेतसुरसा वासन्त्यां माधवी लता ।
निस्संगजा कान्तनाला प्रहसन्ती कुटुंबिका ॥ १८७ ॥
अतिमुक्तश्च कन्यायां कुमारी तरुणी सहा ।
महासहायामम्लानः पीताम्लाने कुरण्डकः ॥ १८८ ॥
शोणे बली कुरवको झाटेऽस्मिन् कलशोदकः ।
किंकिराते किंकिराटः प्रलोही चापि लातकः ॥ १८९ ॥
सैरेयके तु झिण्टी स्त्री तस्मिन् कुरवकोऽरुणे ।
दासी सहाऽप्यार्तगलः कुरण्डश्च सनीलकः ॥ १९० ॥
पीतेऽव्यथः कुरवकस्सहा स्त्री सहचर्यपण् ।
कुन्दे माध्यश्शुक्लपुष्पो वासोऽथ करवीरकः ॥ १९१ ॥



प्रतिहासश्शतप्रासश्शितिकुंभोऽश्वमारकः ।
चंडातोऽश्वरिपुश्श्वेते मरालोऽत्रातिलोहिते ॥ १९२ ॥
भुज उग्रविषः काकनासायां शिवमल्लिका ।
बकपुष्पस्तूलपुष्पः काकशीर्षश्शिवप्रियः ॥ १९३ ॥
वसुभट्टः पाशुपत एकाष्ठीलोऽम्बुको वसुः ।
नन्द्यावर्ते तु तगरस्तारावटनभोऽगणौ ॥ १९४ ॥
जपायां रुद्रपुष्पं स्यादत्र पद्मादयोऽपि च ।
विदार्यां भूमिकूश्माण्डस्सा तु कृष्णा पलाशिका ॥ १९५ ॥
कोष्ट्रिका क्षीरशुक्लेक्षुगन्धिकेक्षुविदारिका ।
श्वेता क्षीरविदारी सा महाश्वेतर्क्षगन्धिका ॥ १९६ ॥
शारद्यां लांगली तोयपिप्पली शकुलादनी ।
गोलोम्यां जटिलोग्रोग्रगन्धा तीक्ष्णा जया वचा ॥ १९७ ॥
मंगल्या चाथ शुक्ला सा षड्ग्रन्था जललंबिका ।
श्यामा तु सा घुणाभीष्टा काश्मीरी देवदुन्दुभिः ॥ १९८ ॥
कैवर्ती मुस्तकेत्वासौ गुन्द्रायां भद्रमुस्तकः ।
महोदरी वरारोहा नादेयी वलयो वरम् ॥ १९९ ॥
मुस्तायां मुस्तकं न स्त्री सुगन्धः कर्णपूरकः ।
शकुलाक्षश्श्वेतमध्यो हंसः पीठरदुन्दुभे ॥ २०० ॥
जलमुस्ते तु प्लवनं गोदर्भं परिपेलवम् ।
कुटन्नटं दशपुरं गोपुरं वर्तकं प्लवम् ॥ २०१ ॥
पालं तु पिंगलं वज्रं श्रीबेरं दीर्घरोमकम् ।
चामरं चमकं ज्येष्ठं बर्हिष्ठं जटिलं जटा ॥ २०२ ॥
शैलमूलं तु कच्चोरं पलाशो हिमजा जटी ।
अर्शोघ्न्यां मुसली ताली तालमूली फलिन्यपि ॥ २०३ ॥

खञ्जेऽरिष्टो गृहोच्छिष्टो रसोनो गृंजनः कटुः ।
कायांगं लशुनं दिव्यं महाकन्दामृतोद्भवे ॥ २०४ ॥
जीर्णकं च पलाण्डुस्तु श्वेतकन्दो मुकुन्दकः ।
हरितेऽस्मिन् लतार्कस्स्यात् फरुण्डो दुद्रुमो रसः ॥ २०५ ॥
स्वल्पकन्दे हरिद्रक्ते गृञ्जनो गर्जनो गुजः ।
लशुनं दीर्घपत्रं च पिच्छनन्द्रो महौषधः ॥ २०६ ॥
फरुण्डश्च पलाण्डुश्च लतार्कश्च परारिका ।
गृञ्जनो यवनेष्टश्च पलाण्डोर्दश जातयः ॥ २०७ ॥
कन्दं त्वस्त्री चित्रदण्ड उल्लुः कण्डूरसूरणौ ।
अर्शोघ्नो दैत्यमदनः कचूस्तु दलकूर्चिका ॥ २०८ ॥
शकटश्चाथ कालाची नूतनं वेष्टितं दलं ।
शोथशत्रौ महापद्मो मोहो माणो बृहच्छदः ॥ २०९ ॥
वराहकन्दे वाराही चक्रोष्ट्र्यां मालुवा स्त्रियाम् ।
मध्वालुको मधुरसः कन्दलः कन्दली समौ ॥ २१० ॥
गौर्यां हरिद्रा रात्र्याख्या हेमघ्नी काञ्चनी परा ।
रोचनी रञ्जनी पीता पिञ्जा पिण्डा मनश्शिला ॥ २११ ॥
तोषणी वर्णिनी बाला विटकान्ता तरंगिणी ।
दार्व्यां दारुहरिद्रा स्यात् पीतदारुश्च पर्जनी ॥ २१२ ॥
पचंपचा कर्कटिनी पर्परा पर्पटी वरा ।
कटंकटेरी कालेयः प्रकोच्यां तु कटूत्कटम् ॥ २१३ ॥
कटुभंगं शृंगिबेरमार्द्रमार्द्रकमस्त्रियौ ।
वेणौ तु वंशकर्मारौ मृत्युपुष्पस्तृणध्वजः ॥ २१४ ॥
त्वचिसारो यवफलःखेलस्तेजनमस्करौ ।
चपश्च तेषु पवनोद्धूतध्वनिषु कीचकाः ॥ २१५ ॥



निस्तुषौ विषमो वेणौ क्षुद्रे लगुडवंशिका ।
तृणराजे तलस्तालो महापत्रः फलेरुहः ॥ २१६ ॥
क्रमुके वाटिका घोण्टा गुवाकः क्रूर आसवः ।
कषायो रागवान् पूगः फले पर्कटमस्य तत् ॥ २१७ ॥
पक्वं जोडं खरं शुष्कं चिक्कणे चक्कचक्कणे ।
दीर्घवृन्ते रामपूगो लतापूगे तु योजनः ॥ २१८ ॥
भूपूगे लघुकः क्षुद्रफले पाथोवकापि च ।
पूगे गैरेयकश्शैलजातेऽथ स्याच्छतांकुरः ॥ २१९ ॥
हिन्तालस्तृणराजश्च नालिकेरे तु लांगली ।
दाक्षिणात्योऽप्फलोऽबालसुतंगः कूर्चकेसरः ॥ २२० ॥
सदाफलो बली चास्मिन् ह्रस्वे स्यात् खुड्डकोऽत्र तु ।
रक्ते स्वर्णोऽग्निकश्चाथ परिक्रोणास्य पट्टके ॥ २२१ ॥
खपुरः पूगपट्टोऽथ मधुक्षीरो महारसः ।
परुषः पाण्डुखर्जूरौ तस्मिन् खर्जूरिकाल्पके ॥ २२२ ॥
हलीमे केतकी न क्ली दीनो व्यञ्जनजंबुलौ ।
स्त्रीभूषणो रजःपुष्पो गुप्तरागो वलीनकः ॥ २२३ ॥
ताल्यां दृढदला ताडी पत्रताली वरांगना ।
पत्रला फलपाकान्ता ताल्याद्यास्स्युस्तृणद्रुमाः ॥ २२४ ॥
सवेणवस्ते त्वक्सारास्तृणानीक्षुयवादयः ।
इक्षुर्दृष्यो मधुतृणो मृत्युपुष्पो महारसः ॥ २२५ ॥
खड्गपत्रोऽप्यथानिक्षुर्वायसालीक्षुपालिका ।
इक्षुभेदास्तु कान्तारवंशपुंड्रादयो नरि ॥ २२६ ॥
दर्भोऽश्ववालः काशिर्ना काशोऽस्त्री स्त्रीक्षुगन्धिका ।
कुशे मुनिः कुथो दर्भो वीनाहो यज्ञजागरः ॥ २२७ ॥

लताकुशे तु शीरी स्त्री धमने सुषिरो नलः ।
शरो मुञ्जो भद्रमुञ्जो गुन्द्रस्तेजनकः खरः ॥ २२८ ॥
मुञ्जस्तु यज्ञियो मेध्यो मृदुत्वक् ब्रह्ममेखलः ।
उलूकस्तूलपो दर्भ ऊर्ध्वमूलः खरच्छदः ॥ २२९ ॥
वालकेश्यां दृढदला जूर्णा कृकणपत्रिका ।
पुंभूम्नि बल्बजा वाव्यान्तूत्कटस्स्यात् पराशकः ॥ २३० ॥
स्याद्वीरणं वीरतृणं मूलेऽस्योशीरमस्त्रियाम् ।
सेव्या मृणालनलदलामज्जानि जलाशयम् ॥ २३१ ॥
नियुतस्तंबजदृढदैत्यगौरकुदानवम् ।
अभयं चावदाहं च दूर्वा तु हरितालिका ॥ २३२ ॥
वरा सहस्रवीर्या च भार्गवी चाथ सा सिता ।
गोलोमी शतवीर्या च गोऽर्गेलस्त्वेरका तृणम् ॥ २३३ ॥
सौगन्धिकं देवजग्धं ध्यामकं कत्तृणं पुरम् ।
छत्रातिछत्रपालघ्नौ मालातृणकभूस्तृणे ॥ २३४ ॥
पुञ्जीलस्तु तृणस्तंब इषीका तूलिका समे ।
शष्पं बालतृणं शादस्सर्वं तु तृणमर्जुनम् ॥ २३५ ॥

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
भूमिकाण्डे वनाध्यायः)



## पशुसङ्ग्रहाध्यायः

सिंहो मृगेन्द्रः पञ्चास्यः पारीन्द्रश्श्वेतपिंगलः ।
व्यादीर्णास्यो महानादश्शार्दूलस्तुल्यविक्रमः ॥ १ ॥
कण्ठीरवो मृगरिपुस्सुगन्धिर्हरितो हरिः ।
हलीक्षणस्तृणसिंहस्स्यात् कुटरुर्मृगसिंहकः ॥ २ ॥
व्याघ्रो मृगारिश्शार्दूलो हिंसारुश्चन्द्रकी मृगात् ।
हुण्डश्चाल्पस्त्वयं द्वीपी चुलुको भेलमेहिनौ ॥ ३ ॥
तरक्षुस्तु मृगाजीवस्तिलित्सकमृगादनौ ।
पिण्डारकस्तु चित्रांगो महादंष्ट्रो वरोत्कटः ॥ ४ ॥
वराहस्सूकरो घोणी वक्रदंष्ट्रो जलप्रियः ।
पीनस्कन्धस्स्तब्धरोमा कामरूपी तलेक्षणः ॥ ५ ॥
भूदारः कुमुखो घृष्टिस्स्थूलनासो बहुप्रजः ।
पंकक्रीडनकः पोत्री किटिराखनिकः किरिः ॥ ६ ॥
भल्लूको दीर्घरोमर्क्षो भल्लाटो वृकधूर्तकः ।
विकरालोऽच्छभल्लश्च गण्डके खड्गखड्गिनौ ॥ ७ ॥
वार्ध्राणसो गणोत्साहः कोकस्त्वीहामृगो वृकः ।
महिषस्सैरिभोऽश्वारिर्जलात्मा गद्गदस्वरः ॥ ८ ॥
लुलायः कासरश्शृंगी हेरंबः कृष्णशृंगकः ।
जरन्तः कलुषः पोत्री वीरस्कन्धो रजस्वलः ॥ ९ ॥
स्कन्धशृंगो यमरथः कटाहो दंशलालिकः ।
हंसकालीसुतश्चाथ सृजया महिषोऽसितः ॥ १० ॥
गवलश्च परस्वांश्च महिषस्स्यादरण्यजः ।
मृगः प्लावी भीरुचेता वननो मरुको लिगुः ॥ ११ ॥

नित्यशंकी च कृष्णस्तु कृष्णसारो निरञ्जनः ।
यज्ञांग एणस्ताम्रस्तु हरिणस्तृणसंवरः ॥ १२ ॥
राजीवस्त्वेष राजीमान् सितक्रोडस्स चीनकः ।
शंबरस्स्वल्पहरिणः पृषतस्तु स बिन्दुमान् ॥ १३ ॥
रुरुर्महान् कृष्णसारः कुरंगो हरिणो महान् ।
रोहिद्दश्यो हरिणवन्मृदुशृंगः प्रतापसः ॥ १४ ॥
न्यंकुस्तु शंबराकारस्त्रिकेण विपुलोन्नतः ।
परंपरस्तु गोकर्णः पोटरूपस्तु तत्समः ॥ १५ ॥
रौहिषो गर्दभाभासो रोहितश्श्वेतराजिमान् ।
वातायुस्स्याद्वातमृगो जवी वातप्रमीश्शिवः ॥ १६ ॥
प्रियको रोमभिर्युक्तो मृदूच्चमसृणैर्घनैः ।
नीलस्स श्वेतरेखावानथवा श्वेतचन्द्रकः ॥ १७ ॥
कदली तु बिले शेते मृदुरूक्षोच्चकर्बुरैः ।
नीलाग्रैरोमभिर्युक्ता सा विंशत्यंगुलायता ॥ १८ ॥
श्यामिका तु श्वेतबिन्दुश्श्यामला षोडशांगुला ।
चतुरा तु घनस्निग्धरोमा श्यामा सचन्द्रका ॥ १९ ॥
कालका त्वसिता यद्वा कपोता पिङ्गबिन्दुका ।
सामूना तु समूरुर्ना सार्धहस्तसमायता ॥ २० ॥
गोधूमाभाथवा कृष्णा स्निग्धोच्चमृदुरोमिका ।
चीनस्तु चीनसी स्त्रीत्वे कपोता त्रिंशदंगुला ॥ २१ ॥
मरुजा तूच्चमसृणमृदुपाण्डुररोमिका ।
रोमराजीमती मध्ये द्वादशांगुलसंमिता ॥ २२ ॥
चनका तु चमूरुर्ना सिताभा यदि वासिता ।
कृष्णरोमानुविद्धा वा पुच्छोऽस्या न भवत्यपि ॥ २३ ॥



सेलिसस्तु मृदुश्वेतरूक्षोच्चघनरोमकः ।
चमूरुस्तु महाग्रीवस्सितः केसरवाञ्जवी ॥ २४ ॥
कदली तु श्यामवर्णा हस्तायामा महोदरी ।
एते स्युः कृष्णसाराद्या मृगा अजिनयोनयः ॥ २५ ॥
शशतुल्या विजातिश्च रक्ताभा मृगमातृका ।
बिलेशया तु क्रिमिरा कुमारी तु हिमद्युतिः ॥ २६ ॥
कुचारुश्चारुपुच्छस्स्यात् सुविषाणो वृषाकृतिः ।
कृतारुस्तु स निष्पुच्छो जायते हिमवत्तटे ॥ २७ ॥
रुचुस्तु शुक्लो मेषाभः स पीतस्सूकराकृतिः ।
कृष्णे शृंगे च तस्याथ कृतमालो वृकाकृतिः ॥ २८ ॥
सृमरस्स्याद्वालमृगः परुर्ना चमरी न षण् ।
कालपुच्छस्तु तत्प्रायो नामार्थेनैव भिद्यते ॥ २९ ॥
चारुकस्तु किशोराभः कन्दरस्तूच्चजानुकः ।
मृगास्स्युः कृष्णसाराद्यास्त एव पशवस्सह ॥ ३० ॥
सिंहाद्यैश्च शशाद्यैश्च ग्राम्यैश्चैव गवादिभिः ।
शशस्तु रोमकर्णस्स्यान्मृदुरोमा च शूलिकः ॥ ३१ ॥
गन्धर्वस्स्याद्गोलपुसो रामस्तु वृकधोरणः ।
शरभस्तु गजारातिरुत्पादश्चाष्टपादपि ॥ ३२ ॥
गवयस्स्याद्वनगवो गोवाही वाहवारणः ।
कोलांगकस्तु जलुको भालुको भल्लुकाकृतिः ॥ ३३ ॥
पुरोही स्यात्कुलचरो ललनाक्षो वृकाकृतिः ।
कोट्टंगस्स्याज्जन्तुधरो मार्जारी चमराकृतिः ॥ ३४ ॥
शालिजातस्तु खट्टासः पूतिः खट्टासिकापि च ।
शिवेव स्यात् गन्धमृगः कस्तूरी मृगपालिका ॥ ३५ ॥

अण्डौ तु तस्याः कस्तूरी राजार्हं शितिचन्दनम् ।
मार्जारिका वेधमुख्या मदनी गन्धचेलिका ॥ ३६ ॥
श्वाविच्छललशल्यौ तल्लोम्न्यना शलली शलम् ।
सृगालो भरुजः क्रोष्टा श्वभीरुर्मृगमत्तकः ॥ ३७ ॥
शयालुस्सूचको घोरः फेरुफेरुण्डफेरवाः ।
मृगधूर्तो भूरिमायो गोमायुर्वृकधूर्तकः ॥ ३८ ॥
किखिस्त्री क्रोष्टुभेदेऽल्पे पृथौ लोपाशगुण्डिवौ ।
वानरो मर्कटः कीशः कपिश्शाखामृगो हरिः ॥ ३९ ॥
महावेगो दधिमुखः कुरंगो भल्लुकः पृथुः ।
वलीमुखो वनौकास्स गोलांगूलोऽसिताननः ॥ ४० ॥
नीलशीर्षोऽप्यथ क्षिवको वानरो रोहिताननः ।
शृंगिणी सौरभेयी गौरघ्न्या माहेय्युषा शुभा ॥ ४१ ॥
अनड्वाह्यनडुह्युस्रा तंबा तंपा निलिंपिका ।
रजःपूता च कृष्णाऽसौ बहुला क्षितिसंभवा ॥ ४२ ॥
सिता तु धवला पुण्ड्रा सुनन्दा जलसंभवा ।
कपिला त्वग्निजा दाक्षी सुरभिः कामरूपिणी ॥ ४३ ॥
रक्तवर्णा रोहिणी स्याच्छीतला वायुसंभवा ।
शबली तु प्रक्षरांगी सुमना व्योमसंभवा ॥ ४४ ॥
वरांगा तु चतुर्वर्षा द्विवर्षा तु द्विहायनी ।
एकहायन्येकवर्षा बहुक्षीरा तु वञ्जुला ॥ ४५ ॥
नैचिकी गौर्गवां श्रेष्ठा भद्रा गौर्गोमतल्लिका ।
काल्योपसर्या प्रजने पलिक्नी बालगर्भिणी ॥ ४६ ॥
पष्ठौह्यन्या वशा वन्ध्या वेहद्गर्भोपघातिनी ।
अवतोका स्रवद्गर्भा वत्सकामा तु वत्सला ॥ ४७ ॥



चिरसूता बष्कयणी गृष्टिस्सूतवती सकृत् ।
समांसमीना सा गौर्या प्रतिवर्षं प्रसूयते ॥ ४८ ॥
पीनस्तनी तु पीनोध्नी सुखदोह्या तु सुव्रता ।
दुःखदोह्या तु करटा प्रस्तुता प्रसवोन्मुखी ॥ ४९ ॥
द्रोणक्षीरा द्रोणदुघा बहुसूतिः परेष्टुका ।
धेनुर्नवप्रसूता गौर्धेनुष्या बन्धके स्थिता ॥ ५० ॥
अभिवान्यान्यवत्सा गौर्वृषाक्रान्ता तु सन्धिनी ।
आपीनमूधो वृन्तं तु स्तनो वत्सस्तु तर्णकः ॥ ५१ ॥
विषाणी वृषभश्शृंगी वाहो गौरक्षधूर्तिलः ।
उक्षा गौर्वृषलोऽनड्वान्वाह्यस्स्कन्धवहो वही ॥ ५२ ॥
सौरभेयो बलीवर्दो बाडबेयश्च शाक्करः ।
षण्डस्तु गोपतिश्श्रीमान् डंक इट्वर ईश्वरः ॥ ५३ ॥
ककुदी गोवृषो घोणः ककुद्मान्मदकोहलः ।
जातोक्षो जातमात्रोक्षा दम्यो वत्सतरस्समौ ॥ ५४ ॥
महोक्षस्स्यादुक्षतरो वृद्धोक्षस्तु जरद्गवः ।
आर्षभ्यष्षण्डतायोग्यो नैचिक्याः प्राक्परे त्रिषु ॥ ५५ ॥
भग्नशृंगपशुः कूटः प्रष्ठवाड्युगपार्श्वगः ।
स्थूरी पृष्ठ्यः पृष्ठवाह्यस्स्कन्धिकस्स्कंधवाहकः ॥ ५६ ॥
नस्योतो नस्तिते षोडन् षड्दे ऽथो धुरंधरे ।
धुरीणधुर्यधौरेयाः प्रासङ्गादेस्तु वोढृषु ॥ ५७ ॥
प्रासंग्यश्शाकटो युग्यो हालिकस्सैरिकादयः ।
एवं सर्वधुरीणैकधुरीणैकधुरा अपि ॥ ५८ ॥
कर्णः कर्णविहीनस्स्यात् पण्डस्तु च्छिन्नपुच्छकः ।
गोमान् गोमी च गोस्वामी गोविन्दोऽधिकृतो गवाम् ॥ ५९ ॥

नैचिकी गोशिरोदेशस्सास्ना तु गलकंबलः ।
गोशकृद्रोमयो न स्त्री गोग्रन्थिश्शुष्कगोमयः ॥ ६० ॥
दोहलं तु करीषोऽस्त्री गोकुलं गोधनं समे ।
गोमहिष्यादिकं जीवधनं स्यात्पाशबन्धनम् ॥ ६१ ॥
छगस्तु छगलश्छागो लंबकर्णस्स्तभः पशुः ।
बस्तोऽजश्च छगी मञ्जी सर्वभक्षा गलस्तनी ॥ ६२ ॥
चुलुंपा चित्रला हृद्या पर्णादा पलिकिन्यजा ।
इलिकस्तु वनच्छागो वालवीज्यो निरायसः ॥ ६३ ॥
मेषे शृंगिणसंफालवृष्णिपेत्वहुलुहूदाः ।
एडकोऽप्युरणो मीढ उरभ्रो रोमशोऽप्यविः ॥ ६४ ॥
मेषी तु कुररी वेणी जालकिन्यविला रुजा ।
खररासभचक्रीवद्वाहबालेयगर्दभाः ॥ ६५ ॥
रूक्षस्वरो धूम्रकर्णो नेमिर्भारसहश्शलः ।
चिरमेही गर्दनकः कोलिण्टो बडबापतिः ॥ ६६ ॥
करभश्च मयस्तूष्ट्रो महाग्रीवः क्रमेलकः ।
दाशेरकश्च रवणः करभस्स्यादसौ शिशुः ॥ ६७ ॥
करभास्स्युश्शृंखलका दारवैः पादबन्धनैः ।
श्वा सारमेयश्शुनको भषणो मृगदंशकः ॥ ६८ ॥
दीर्घनादी गृहमृगः कुकुरः क्रोधनश्शुनिः ।
यक्ष इन्द्रमहश्चालः कपिलो मण्डलश्शुनः ॥ ६९ ॥
जिह्वापानः पुरोगामी कृतज्ञो रात्रिजागरः ।
कौलेयकोऽस्थिखादश्च भवनो भलुहोऽपि च ॥ ७० ॥
शुनी तु सरमा श्वाली विट्चारो ग्रामसूकरः ।
ओतुर्बिडालो मार्जार आखुभुक् पृषदंशकः ॥ ७१ ॥



जाहको गात्रसंकोची मण्डली नखरायुधः ।
पशुस्तु मलुको मोकः कपश्शुद्धजडश्शरिः ॥ ७२ ॥
बाले तु बर्करस्सूता तूबरश्शृंगवर्जितः ।
हिंस्रो व्याघ्रादिको व्यालश्श्वापदो मरुलश्शरिः ॥ ७३ ॥
पुच्छोऽस्त्री लूम लांगूलं बालहस्तश्च वालधिः ।
खुरश्शफश्शको विष्ठा घासस्तु यवसश्शरिः ।
रोमन्थनन्तु रोमन्थरोमोर्णोर्णास्तुकोऽपि च ॥ ७४ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां
वैजयन्त्यां भूमिकाण्डे पशुसङ्ग्रहाध्यायः)

---

### मनुष्याध्यायः

मनुष्या मानुषा मर्त्या मनुजा मानवा नरः ।
द्विपादो नहुषा गोधा व्राताः पञ्चजना नराः ॥ १ ॥
ब्रह्मक्षत्रियविट्शूद्रा इति वर्णाश्चतुष्टये ।
उपवर्णास्तु संकीर्णा विवर्णास्त्वन्त्यजातयः ॥ २ ॥
एकवर्णास्सवर्णास्स्युर्हीनवर्णास्तु जंगिताः ।
सवर्णं ब्राह्मणाद्राज्ञी सूते मूर्धावसिक्तकम् ॥ ३ ॥
वैश्यांबष्ठं निषादं तु शूद्रा पारशवश्च सः ।
एते विवाहजाः पुत्रा व्यभिचारसुताः पुनः ॥ ४ ॥
अभिषिक्तः कुंभकारश्शूलिकश्च यथाक्रमम् ।
विप्रादावृतमुग्रस्त्री निषादी तु मनोजवम् ॥ ५ ॥
अंबष्ठकन्या त्वाभीरं खञ्जमन्तावसायिनी ।
आयोगवी धिग्वनकं कुक्कुटी तु पराजकम् ॥ ६ ॥
भृज्जकण्ठी तु सौधातं शनकी तु बहिर्गरम् ।
वैदेहकी कारुविन्दं मैत्री रन्ध्रं भटी सटम् ॥ ७ ॥
चण्डाली तु श्वचण्डालं शबरी तु परिच्छदम् ।
कालकिश्वं तु करणी यवनी यावशादनम् ॥ ८ ॥
नटी भटं खषी द्रोहं मागधी तु दमण्डकम् ।
पराजकी तु सिद्दुण्डं कारुविन्दी कुविन्दकम् ॥ ९ ॥
रथकारी रथाश्मानमावृती तु खरुञ्जकम् ।
धूता पारावतं सूते श्वपाकी पालुखंजनम् ॥ १० ॥
पुल्कसी भर्मिणं सूते धीवरी तीवरं ततः ।
एते ब्राह्मणपुत्रास्स्युर्नानायोषित्समुद्भवाः ॥ ११ ॥



सूतं विप्रा नृपाद्वैश्या माहिष्यं यवनश्च सः ।
अश्वपण्यमनूढा सा शूद्रानूढैव शूलिकम् ॥ १२ ॥
उग्रमूढा निषादी तु वेणुकं कुक्कुटी कुटम् ।
तीवरी महिषं वेनी रट्टासं पुल्कसी बकम् ॥ १३ ॥
चण्डाली रुचिटं मल्ली पल्लमुग्री झषा परम् ।
श्वपाकी कलुषं सूता कीलुषं घर्घरी मिषम् ॥ १४ ॥
सिद्दुण्डी डिण्डिकं जल्ली भ्रकुश्वं शनकी कचम् ।
कची भ्रेणं भ्रकुश्वी तु पागलं पागली गिलम् ॥ १५ ॥
एते क्षत्रियपुत्रास्स्युर्नानायोषित्समुद्भवाः ।
वैश्याद्वैदेहकं विप्रा क्षत्रकन्या तु मागधम् ॥ १६ ॥
शूद्रा तु करणं सैव जारात्कटकरं ततः ।
कटकर्मा स वेनी तु वागुरं वेणुकी वटम् ॥ १७ ॥
अंबष्ठी कोहलं रन्ध्री घर्घरं विन्दकी भ्रषम् ।
कारुविन्दी पराविद्धमुग्री वेशं कुटी मटम् ॥ १८ ॥
कुक्कुटी पलिनम्मेदी मालुकं मालुकी मकम् ।
चण्डाली नीलिकं वाटी मेणकं करणी वशम् ॥ १९ ॥
रथकारी सनालिंगं वैदेही वानवासिकम् ।
श्वपाकी पाणिशं मल्ली विबुकं डिण्डिकी कशम् ॥ २० ॥
मैत्री वाटं नटी भोलं प्रसूते कीलुषी किटम् ।
घर्घरी धिर्मिणं घोलमित्येते वैश्यसूनवः ॥ २१ ॥
चण्डालं ब्राह्मणी शूद्रात् क्षत्रिया पारधेनुकम् ।
वेलवं सैव चौर्येण वैश्या त्वायोगवं ततः ॥ २२ ॥
चौर्यात् सा चाक्रिकं वेनी वंशिकं फलिनी कुथम् ।
निषादी कुक्कुटं भिल्ली शबरं कोहली नसम् ॥ २३ ॥

पुल्कसी कवटं वाटी मंजनं मालुकी मलम् ।
वैदेहकी नीवलकं धीवरी कलशीनकम् ॥ २४ ॥
भृज्जकण्ठी कुवादुष्कं करणी कालशीनकम् ।
सूता मालसुपर्णाण्डौ सैरन्ध्री रथवारकम् ॥ २५ ॥
नटी भ्राणज्ञकं वाटी विभण्डं द्रमिडी द्रुहम् ।
कैवर्ती धीवरं रन्ध्री कलशं यवनी क्षुदम् ॥ २६ ॥
कारावती सुललिकं कुवादुष्की वशामरवम् ।
चण्डाली पाण्डुकं द्रोही छाणकं महिषी पुरम् ॥ २७ ॥
वरुटी रुण्डकं घोली वीलकं कवटी पुटम् ।
एते शूद्रस्य पुत्रास्स्युर्नानायोषित्समुद्भवाः ॥ २८ ॥
निषादाद्ब्राह्मणी भेकं क्षत्रिया कालकुण्डकम् ।
वैश्या सूचिं हरिं शूद्रा सोऽपि चायोगवः क्वचित् ॥ २९ ॥
कैवर्ती बुरुलं भिल्ली शनकं शनकी रसम् ।
श्वपाकी गर्मुटं घोली घर्घरं द्रमिडी कणम् ॥ ३० ॥
वैदेही कलशं द्रोही श्रेणकं छाणकी लुषम् ।
रथकारी मन्दुपालं मागधी मड्डुकैरिकम् ॥ ३१ ॥
आयोगवी तु कैवर्तं निषादान्मार्गरश्च सः ।
एते निषादपुत्रास्स्युर्नानायोषित्समुद्भवाः ॥ ३२ ॥
जालं वैदेहकाद्विप्रा क्षत्रिया रथकारकम् ।
वैश्या धन्ववनं शूद्रा गैरुषं करणी कृमिम् ॥ ३३ ॥
अंबष्ठी वेनमुग्री तु गर्गरं शनकी हनुम् ।
आयोगवी तु मैत्रेयं पुल्कसी कणकुक्कुटम् ॥ ३४ ॥
निषादी मेदमन्ध्रन्तु सैव चेन्नान्यपूर्विका ।
एते वैदेहपुत्रास्स्युर्नानायोषित्समुद्भवाः ॥ ३५ ॥



मैत्रेयाद्ब्राह्मणी लालं क्षत्रिया जालभूषणम् ।
वैश्या छण्डझटं शूद्रा निषादी लोहमालकम् ॥ ३६ ॥
आयोगवी तु मधुकं घाण्टिकं नान्यपूर्विका ।
एते मैत्रेयपुत्रास्स्युर्नानायोषित्समुद्भवाः ॥ ३७ ॥
विप्रा नाविकमंबष्ठादस्मिन् क्वापि श्वपाकवाक् ।
वैणवं सैव माहिष्याद्व्रजकं पारधेनुकात् ॥ ३८ ॥
श्वपचं सैव चण्डालाच्चर्मकञ्चुकजीवनम् ।
मागधात्ताम्रजीवं सा तक्षाणं करणादसौ ॥ ३९ ॥
आयोगवाच्चर्मकारं राज्ञी वार्मिकसूचकौ ।
माहिष्याच्चर्मकारं सा खनकं मागधादसौ ॥ ४० ॥
उद्बन्धं खनकाच्छूद्रा स्पृश्यमंबरनेजकम् ।
अधोनापितमंबष्ठा करणान्मत्स्यबन्धकम् ॥ ४१ ॥
वैश्या सामुद्रमाजीवेत् पण्यं सामुद्रमेव सः ।
निषादी धिग्वनाच्चर्मकारं कारावरोऽपि सः ॥ ४२ ॥
कारावरो निषादेन वैदेह्यामिति के चन ।
वैदेही पाण्डुसोपाकं चण्डालात् कुंकणश्च सः ॥ ४३ ॥
आहिण्डिकं निषादात् सा कवटी तु हुरिञ्जकम् ।
निष्ट्याच्छूद्रा मधुश्रेणिं शौण्डिकं मण्डहारकम् ॥ ४४ ॥
उग्री क्रमेलकं तस्मान्निर्णेक्ता रजकश्च सः ।
सोपाकं पुल्कसी निष्ट्याच्चण्डालादिति के चन ॥ ४५ ॥
अन्ध्री तु शबरान्निष्ट्यं भिल्लं सा निष्ट्यपूर्विका ।
किरातं पर्णशबरी शबरान्निष्ट्यपूर्विका ॥ ४६ ॥
पुलिन्दपर्णशबरौ किराती निष्ट्यपूर्विका ।
पुलिन्दश्वपचौ निष्ट्यात् किराती नान्यपूर्विका ॥ ४७ ॥

रथकारं तु माहिष्यात्करणी माहिषाड्कम् ।
पुल्कसं सैव चण्डालात् किरातात्पलगण्डकम् ॥ ४८ ॥
चण्डालात्पुल्कसी डोंबं निषाद्यन्तावसायिनम् ।
डोंबी रवषं सैव निष्ट्यात् बिभेणं हड्डिकं रवषी ॥ ४९ ॥
तीवरी धीवरात्पौण्ड्रं बर्बरं यवनादसौ ।
पुल्कसात्पामरं वेनाच्छुषं डोंबाद्दराणकम् ॥ ५० ॥
श्वपाकं क्षत्तुरुग्रस्त्री केचिदाहुर्विपर्ययम् ।
चूचुं किराती शबराद्वैदेहात्पुल्कसात् क्वचित् ॥ ५१ ॥
निष्ट्यात्तु वरुटी मद्गुं वल्लारन्तु किरातिका ।
निषादपुल्कसाद्यास्तु पूर्वोक्ता इह नोत्तरे ॥ ५२ ॥
विप्रा· व्रात्यात् भृज्जकण्ठमावन्त्यं विप्रपूर्विका ।
अध्यूढा वाटधानं सा शैखं सा नान्यपूर्विका ॥ ५३ ॥
सा पुष्पवं पुष्पवती सम्यगूढा द्विजन्मना ।
लिच्छिविं क्षत्रिया व्रात्याज्झल्लं सा विप्रपूर्विका ॥ ५४ ॥
व्रात्यपूर्वा तु सा मल्लं क्षत्रपूर्वा तु सा नटम् ।
प्राक्प्रसूतस्त्वजातिस्सा वरुटं करणश्च सः ॥ ५५ ॥
सा वैश्यपूर्वा द्रमिडं शूद्रपूर्वा तु सा रवषम् ।
वैश्या व्रात्यात् सुधन्वानमाचार्यं विप्रपूर्विका ॥ ५६ ॥
सुधन्वाचार्य एको वा मैत्रं सा वैश्यपूर्विका ।
शूद्रपूर्वा द्विजन्मानं सात्त्वतं क्षत्रपूर्विका ॥ ५७ ॥
अपूर्वा भारुषं कारुं ब्रह्मक्षत्रविशाममी ।
व्रात्यानां क्रमशः पुत्राश्शूद्रा व्रात्याच्छ्वकण्टकम् ॥ ५८ ॥
कुर्वन्त्यनुपनीता ये विवाहं ब्राह्मणादयः ।
व्रात्या व्राताश्च ते सर्वे तत्सुताश्चावृतासु ये ॥ ५९ ॥



अवरेटस्सवर्णायां जाराज्जातस्सवर्णकात् ।
पत्यौ जीवति कुण्डोऽसौ भर्तर्यसति गोलकः ॥ ६० ॥
अविवाह्यासु जाताश्च तथा स्युः कुण्डगोलकाः ।
ये च प्रव्रजितापुत्रास्तथा प्रव्रजितस्य ये ॥ ६१ ॥
क्षत्रकुण्डः पट्टबन्धो भोजः क्षत्रियगोलकः ।
देवप्रैष्यो विप्रकुण्डो ग्रामप्रैष्यस्तु गोलकः ॥ ६२ ॥
मणिकारो वैश्यकुण्डश्शंखकारस्तु गोलकः ।
शूद्रकुण्डो मालवको घासहारस्तु गोलकः ॥ ६३ ॥
एषां लक्षणसिद्ध्यर्थं केषां चिद्वृत्तिरुच्यते ।
उक्ता प्रागेव केषां चिन्नाम्ना केषां चिदूह्यते ॥ ६४ ॥
मूर्धावसिक्तस्सेनेशो धनुर्वेद्यस्त्रधारकः ।
मणिमन्त्रौषधिज्ञश्च सोंऽबष्ठो यानशिक्षया ॥ ६५ ॥
चिकित्सागणितज्योतिर्ज्ञानी स्यादभिषिक्तकः ।
अंबष्ठो भृज्जकण्ठोऽस्य चिकित्सा शस्त्रसाधना ॥ ६६ ॥
कक्ष्याजीवात्स दौष्यन्तो निषादो ध्वजघोषणात् ।
कुंभकारो भाण्डवृत्तिरेष स्यादूर्ध्वनापितः ॥ ६७ ॥
नाभेरूर्ध्वं वपन् पुंसां सूतकप्रेतकादिषु ।
चित्रमर्द्दलनृत्तज्ञः कालीं पारशवोऽर्चयेत् ॥ ६८ ॥
शूलिको दण्डयेद्दण्ड्यान् शूलारोपादिकर्मणा ।
निषादो मृगघातात्स माहिष्यो नृत्तगीतवित् ॥ ६९ ॥
स एव मंकुशोऽथासौ निषादस्सस्यरक्षया ।
जीवन् सवर्णो नक्षत्रैस्सोंऽबष्ठो वैद्यशास्त्रवित् ॥ ७० ॥
महानर्मा च मद्गुश्च स श्रेष्ठी वैश्यवृत्तितः ।
अश्वपण्यस्त्वाश्विकाख्यस्सोऽश्वव्यापारजीवनः ॥ ७१ ॥

उग्रो दण्ड्यान्दण्डयेत्स दौष्यन्तो मत्स्यघातनात् ।
निषादो व्यालादिवधाद्यवनः कुञ्जरग्रहात् ॥ ७२ ॥
पुरो धावन् पारशवो राज्ञश्शस्त्रञ्च धारयन् ।
धनान्तःपुररक्षश्च शूलिकश्शूलिकोपमः ॥ ७३ ॥
करणो लेखको राज्ञां वारकश्शकनामकः ।
चूचुकश्शाकतांबूलक्रमुकादिकविक्रयात् ॥ ७४ ॥
रथकारो निधिप्रश्नद्यूतापणनिरूपणात् ।
रथकारो व्यालमृगहिंसावृत्तिरिति क्वचित् ॥ ७५ ॥
उग्रः पारशवो दुर्गधनान्तःपुरपालनात् ।
अन्वर्थस्स्यात् कटकरो द्वादशैतेऽनुलोमजाः ॥ ७६ ॥
इतिहासपुराणज्ञस्सूतो देवांश्च पूजयेत् ।
सूत ऊढासुतः पक्ता स्थानालंकरणादिकृत् ॥ ७७ ॥
सोऽनूढाजो रथाश्वानां वाहको रथकारकः ।
वैदेहकस्य स्त्रीरक्षा स वन्दी स्तुतिजीवनात् ॥ ७८ ॥
मौकल्यो रामको वस्त्रस्यूतिरञ्जनजीवनात् ।
मागधोऽसावनूढाजो जंघाकरिकवृत्तिकः ॥ ७९ ॥
वाप्याद्यवतरेच्छुध्यै क्षालयेन्मलिनांबरम् ।
वणिक्पथे मागधस्य वाग्मी राजप्रबोधनम् ॥ ८० ॥
चूचुको वेधनेनासौ स वन्दी स्तुतिकर्मणा ।
वैतालिको बोधनया वेणुवीणादिवादनैः ॥ ८१ ॥
धीवरो मार्गसंत्राणाद्रामको दौत्यजीवनात् ।
आयोगवः पुल्कसश्च स वासःकांस्यजीवनात् ॥ ८२ ॥
चौर्याज्जातः पुलिन्दोऽसौ स हन्ता दुष्टसत्त्वकान् ।
चण्डालो झल्लरीकक्षो वर्ध्रीकण्ठो मलं हरेत् ॥ ८३ ॥



स्यात्पारधेनुको वेनो गोधादिवधबन्धकृत् ।
स निषादो मत्स्यघातान्मद्गुराघोषणेन सः ॥ ८४ ॥
क्षत्ता दौत्यद्वारपाल्यात् पुल्कसो मद्यविक्रयात् ।
पेलवः पुनरस्पृश्यो जंभको नृत्तगानवित् ॥ ८५ ॥
आयोगवस्तैजसकृद्रुक्मकृन्मणिवेधकृत् ।
स तक्षा तक्षणाज्जीवन् स्थपतिर्निगराधिकृत् ॥ ८६ ॥
अन्तावसायी वपनान्मागधश्चित्रकर्मणा ।
स वैदेहः पाशुपाल्यात्तद्रसानाञ्च विक्रयात् ॥ ८७ ॥
पुल्कसस्तान्तवेनासौ चाक्रिकस्तैलविक्रयात् ।
लवणक्रीतकोऽसौ स्याल्लवणस्यैव विक्रयात् ॥ ८८ ॥
एवमेकादश प्रोक्ता वर्णानां प्रतिलोमजाः ।
गोधादिवधबन्धास्तु हरीणां पुल्कसाश्च ते ॥ ८९ ॥
रथकारो वास्तुवृत्तिरिज्याधानोपनीतिमान् ।
आवृतानान्तु हस्त्यश्वस्यन्दनेष्वधिकारिता ॥ ९० ॥
शूर्पच्छत्रादिकर्माणि सूचीनां ते च पुल्कसाः ।
कैवर्तानां पक्षिपशुमृगघातनजीवनम् ॥ ९१ ॥
अन्ध्राणान्तु गृहद्वाररथ्यावस्करशोधनम् ।
मेदानां चक्रवृत्तित्वं विण्मूत्रग्रहणोज्झनम् ॥ ९२ ॥
आहिण्डिकानां कारासु बहिः स्थित्वाभिरक्षणम् ।
मेदान्ध्रचूचुमद्गूनामारण्यपशुहिंसनम् ॥ ९३ ॥
मैत्रेयकः प्रशंसेन्नृन् घण्टाताडोऽरुणोदये ।
पारावरश्छत्रधरो दीपधृद्वाहको नृणाम् ॥ ९४ ॥
कुर्यादासनरक्षाश्च चर्मच्छेदनसीवनम् ।
कुक्कुटानां शस्त्रकृती राज्ञां कुक्कुटखेलनम् ॥ ९५ ॥

मागधादपि शूद्रायां कुक्कुटो नाम जायते ।
योऽन्वेष्टोद्यानवप्रादेर्वैश्याज्जातोऽपि कुक्कुटः ॥ ९६ ॥
निषाद्यां तन्तुवायोऽसौ वृक्षच्छेदावरोपकृत् ।
धिग्वनानां तु कार्मार्यं वेनानां भाण्डवादनम् ॥ ९७ ॥
वेणः कुशीलवश्चासौ लंघनप्लवनादिभिः ।
वेणो राज्ञीसुतोऽप्युग्रान्मायासम्मोहनादिकृत् ॥ ९८ ॥
वैदेह्यंबष्ठजो वेनो नाट्यरंगावतारकृत् ।
आभीराणां जीवधनं कूटानामश्मतक्षणम् ॥ ९९ ॥
नौवाहो मार्गरो नद्यां नाविकस्त्वब्धिनौगमः ।
शैखोऽभिचारं कुर्वीत कार्मणं भृज्जकण्ठकः ॥ १०० ॥
मन्त्रौषधैर्द्विषत्सेनां वशी कुर्वीत पुष्पवः ।
आवन्त्यो वाटधानश्च स्वसेनाचित्तवृत्तिवित् ॥ १०१ ॥
व्रात्याः क्षत्रसुताश्शत्रुकोशमन्त्रादिवेदिनः ।
खषाणां तोयाहरणं द्रमिलानां प्रपाकृतिः ॥ १०२ ॥
नटानां करणानाञ्च चारवृत्तिस्स्फुटास्फुटा ।
भारुषस्त्वर्चयेन्मातृश्श्मशानादि चतुष्पथम् ॥ १०३ ॥
सुधन्वाचार्य ईशानं शाक्यचैत्यादि मैत्रकः ।
भूतप्रेतपिशाचांस्तु विजन्मा सूतिवेश्म च ॥ १०४ ॥
साच्वतः पूजयेद्विष्णुमुक्तो भागवतश्च सः ।
संति भागवताश्चान्ये ब्राह्मणा भगवत्पराः ॥ १०५ ॥
श्वकण्टकस्य शूद्रादि मालवस्याश्वपालनम् ।
वैणवीं पाण्डुसोपाकस्सोपाको मूलवृत्तिकः ॥ १०६ ॥
श्मशानचेलरक्षादिवृत्तयोंऽतावसायिनः ।
वनश्मशानरक्षा तु चण्डालांतावसायिनाम् ॥ १०७ ॥



गरानलप्रयोगाश्च प्रोच्यन्ते दस्युजातयः ।
ब्राह्मणस्य त्रयः पुत्रा वर्णस्त्रीष्वनुलोमजाः ॥ १०८ ॥
शूद्रस्य च त्रयः पुत्रास्तास्वेव प्रतिलोमजाः ।
त्रयस्त्रयः क्षत्रविशोः प्रतिलोमानुलोमजाः ॥ १०९ ॥
एते द्वादश वर्णानां पुत्रा एकैकशस्तु ते ।
चातुर्वर्ण्ये प्रसूयन्ते चतुरश्चतुरस्सुतान् ॥ ११० ॥
ते चत्वारिंशदष्टौ च पूर्वैर्द्वादशभिस्सह ।
ब्राह्मणाद्यैश्चतुर्भिश्च चतुष्षष्टिर्हि जातयः ॥ १११ ॥
ते सर्वे दस्यवो दोषैश्चौर्याद्यैस्सद्बहिष्कृताः ।
आसाविकस्तु सैरिन्ध्रो दस्योरायोगवीसुतः ॥ ११२ ॥
दस्यूनां बहुजातित्वाद्बह्व्यस्सैरिन्ध्रजातयः ।
प्रसाधनोपचारज्ञा मृगादिवधजीवनाः ॥ ११३ ॥
शाकपुष्पफलानाञ्च विक्रेतारो बहिष्कृताः ।
राजस्त्रीणां सूतिकानां द्वास्थाः प्रेतांबरावृताः ॥ ११४ ॥
विक्रेतारस्सुरां कृत्वा सैरिन्ध्रास्स्युर्यथोचितम् ।
दस्युम्लेच्छगणानान्तु कृषिशस्त्रोपजीवनम् ॥ ११५ ॥
म्लेच्छास्स्युर्विप्रकृष्टा ये म्लेच्छवाचो वनौकसः ।
कार्या क्षत्तुग्रवैदेहैरन्या वृत्तिरगर्हिता ॥ ११६ ॥
मेदान्ध्रैर्गर्हिता वृत्तिरनुक्ताः कुलवृत्तयः ।
तत्रापि मातृकीं वृत्तिं गर्हितामनुलोमजाः ॥ ११७ ॥
भजेरन् प्रतिलोमास्तु पैतृकं कर्म गर्हितम् ।
अनुलोमा निकृष्टायामुत्कृष्टादुद्भवन्ति ये ॥ ११८ ॥
प्रतिलोमा विपर्यस्ता व्रात्यास्तत्प्रातिलोमजाः ।
अनुलोमप्रातिलोम्यादान्तरालिकसंज्ञिताः ॥ ११९ ॥

वर्णमात्रानुलोमा ये षट् तेऽपशदसंज्ञिताः ।
षडपध्वंसजा ये स्युर्वर्णानां प्रतिलोमजाः ॥ १२० ॥
रजकश्चर्मकारश्च वेनो बुरुल एव च ।
कैवर्तमेदभिल्लाश्च सप्तैता अन्त्यजातयः ॥ १२१ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
भूमिकाण्डे मनुष्याध्यायः)

---



## ब्राह्मणाध्यायः

ब्राह्मणो मुखजो विप्रो भूदेवो मैत्र एतशः ।
अग्रजन्मा वेदगर्भो बाडबश्च त्रयीपुषः ॥ १ ॥
संस्कारास्तु निषेकाद्याश्श्मशानान्ता द्विजन्मनाम् ।
गर्भाधानं तु यौनं स्यात् प्राजापत्यं च मौलिकम् ॥ २ ॥
आधानिकं पुंसवनं पौंस्नमप्यथ गार्भिणम् ।
सीमन्तोन्नयनं नामकर्मामन्त्रणिके समे ॥ ३ ॥
चौलं तु चूडाकरणं क्षुरकर्म तु मुण्डनम् ।
मौण्डिकं भद्राकरणं वपनं परिवापणम् ॥ ४ ॥
सशिखं वपनं तोडं निश्शिखं भिक्षुलोचकम् ।
ओट्टितं त्वतिघृष्टं तत् पंचचीरोट्टितं पुनः ॥ ५ ॥
आडिण्डिकं त्रिषु परे मुण्डस्स्यान्मुण्डितोऽशिखः ।
शिखावानवमुण्डस्स्यात् पंचचूडस्तु सारणः ॥ ६ ॥
उपनायस्तूपनय आनायश्च वटूकृतिः ।
ब्रह्मचारी व्रती वर्णी नैष्ठिकस्तु स आश्रमी ॥ ७ ॥
गायत्रस्तूपकुर्वाणो वैदिकोऽधीतवेदकः ।
प्राजापत्यः कृतोद्वाहस्स एवौदुंबरायणः ॥ ८ ॥
वर्णिलिंगी लिंगवृत्तिर्निस्स्वाध्यायो निराकृतिः ।
वान्ताशी भोजनार्थं यो गोत्रादि वदति स्वकम् ॥ ९ ॥
उच्छिष्टभोजिनो देवनिवेद्यबलिभोजिनः ।
जातिमात्रोपजीवस्तु यस्स स्याद्ब्राह्मणब्रुवः ॥ १० ॥
अजपस्त्वसदध्येता देवाजीवस्तु देवलः ।
अघायवो वधरता विगीताः ख्यातगर्हणाः ॥ ११ ॥

अवगीताश्च हन्ता तु गुरूणां नरकीलकः ।
शिश्विदानो दुराचारो निषिद्धैकरुचिः खरुः ॥ १२ ॥
त्यक्तात्मा त्यक्तसंवासो ह्यवकीर्णी क्षतव्रतः ।
शाखारण्डोऽन्यशाखास्थो वर्णिलिंग्यादयस्त्रिषु ॥ १३ ॥
वानकं तु ब्रह्मचर्यं नियमप्रयमौ व्रते ।
अग्नीन्धनं त्वग्निकार्यमाग्नीध्री चाग्निकारिका ॥ १४ ॥
ग्रासे तु पावनी भिक्षा पुष्कलस्तच्चतुष्टयम् ।
ते चत्वारो हन्तकारो हन्तकारद्वयं घनः ॥ १५ ॥
मुष्ट्यष्टकेऽव्ययं किञ्चित् पुष्कलन्तु तदष्टके ।
पुष्कलानि तु चत्वारि पूर्णपात्रकमस्त्रियाम् ॥ १६ ॥
भिक्षाचारः कौक्कुटिकस्त्रिषु स्यादौर्ध्वरथ्यकः ।
मौञ्जी तु मेखला क्षोणी मौर्वी त्वेकलमात्रिका ॥ १७ ॥
सौत्री तु धटिनी रंभा दण्डस्तु दमयन्तिका ।
पालाशो दण्ड आषाढो व्रते रांभस्तु वैणवः ॥ १८ ॥
बैल्वस्सारस्वतो रौच्यः·पैलवस्त्वौपरोधिकः ।
आश्वत्थस्त्वजितनेमिरौदुंबर उलूखलः ॥ १९ ॥
द्विजायनी ब्रह्मसूत्रं सूत्रं यज्ञोपवीतकम् ।
पवित्रश्चोपवीतन्तु प्रोद्धृते दक्षिणे भुजे ॥ २० ॥
प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलंबितम् ।
कृष्णाजिनं कर्णिकं स्यात् कृत्तिस्स्त्री चर्म चाजिनम् ॥ २१ ॥
गुरुर्देशानो बोधानः क्षाणी च ब्राह्मिकोऽथ सः ।
मन्त्रव्याख्यादिनाचार्य उपाध्यायस्तु पाठनात् ॥ २२ ॥
पाठके तु पठिर्वेदपठिता कलपाठकः ।
पाठको धर्मशास्त्राणां धार्मिको धर्ममाणवः ॥ २३ ॥



एकतीर्थी सतीर्थ्यैकगुरू सब्रह्मचार्यपि ।
धर्मभ्राता सहाध्यायी शैक्षाः प्राथमकल्पिकाः ॥ २४ ॥
छात्रस्तु शिष्यो मोकः प्राडुपज्ञा ज्ञानमादिमम् ।
समौ सिद्धान्तराद्धान्तौ ज्ञात्वारंभ उपक्रमः ॥ २५ ॥
पाठे बिन्दुर्ब्रह्मबिन्दुर्ब्रह्मांजलिरिहांजलिः ।
ऋक् स्त्री साम यजुश्चेति वेदास्ते तु त्रयस्त्रयी ॥ २६ ॥
आथर्वणं पौरोहितं वेदाश्चत्वार एव ते ।
छन्दो ब्रह्म श्रुतिर्वेदोऽप्यथ विद्याश्चतुर्दश ॥ २७ ॥
शीक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः ।
ज्योतिषामयनं चेति वेदांगान्यंगिभिस्सह ॥ २८ ॥
मीमांसया पुराणेन स्मृत्या न्यायगणेन च ।
आयुर्वेदो वैद्यशास्त्रं गांधर्वं गीतिशासनम् ॥ २९ ॥
अर्थशास्त्रं दण्डनीतिर्धनुर्वेदोऽस्त्रशासनम् ।
चत्वार उपवेदास्ते विद्याश्चाष्टादशोदिताः ॥ ३० ॥
आन्वीक्षिकी तर्कविद्या निरुक्तं पदभंजना ।
नामशास्त्रे निघण्टुर्ना सर्वविद्या कदन्निका ॥ ३१ ॥
अध्यायः कामिकः काव्ये तूछ्वासस्सर्ग इत्यपि ।
प्रपाठकस्त्वाह्निकोऽथो अनुवाकश्च खण्डिका ॥ ३२ ॥
ब्राह्मणश्चेत्यवच्छेदा एकग्रन्थस्तु फक्किका ।
विध्यर्थवादमन्त्रास्तु खिलान्युपखिलानि च ॥ ३३ ॥
छन्दोभेदास्तु गायत्रीप्रमुखा एकाविंशतिः ।
स्त्रियस्तासु क्रमात् क्लीबे स्युर्गायत्रौष्णिहादयः ॥ ३४ ॥
मुखशोभा वेदशालिमुखे चित्रावनिश्च सा ।
विधा ह्युच्चारणाभेदास्स्पृष्टसंवृततादयः ॥ ३५ ॥

कादयो व्यञ्जनाः स्त्री वा स्पर्शास्ते मावसानकाः ।
स्त्रियोऽन्तस्स्था यरलवा ऊष्माणश्शषसास्सहाः ॥ ३६ ॥
विसर्गस्त्वभिनिष्ठानः परे त्रिष्वनुनासिकः ।
नीचोऽनुदात्तो निहत उदात्तस्स्वरितोऽपि च ॥ ३७ ॥
वरिवस्या तु शुश्रूषा सेवा भक्तिरुपासना ।
परिचर्याराधनञ्च सेवनञ्च प्रसादनम् ॥ ३८ ॥
पूजार्चना नमस्यार्चा सपर्येज्यार्हणांचनम् ।
नमस्या तु नमस्कारो वन्दनं चाभिवादनम् ॥ ३९ ॥
उपसंग्रहणं पादग्रहणेनाभिवादनम् ।
गृहस्थस्स्नातकश्चक्री गृहमेधी गृहीति च ॥ ४० ॥
तस्मिन् सावित्रशालीनौ यः कुसूलेन धान्यभृत् ।
पृथुचित्रः कुण्डधान्यो विघसाशी दिनत्रयी ॥ ४१ ॥
यायावरश्चक्रचरस्सद्यःप्रक्षालितान्नकः ।
परिवेत्ताग्रजेऽनूढे कृतदारपरिग्रहः ॥ ४२ ॥
परिवित्तस्तु तज्ज्यायान् परिवित्तिः कुरी च सः ।
भ्रातुर्मृतस्य जायायां संसक्तो दिधिषूपतिः ॥ ४३ ॥
स तु स्यादग्रदिधिषुर्योऽनुजो रमते तया ।
स्यादग्रेदिधुषुश्चासौ स्यादग्रेदिधिषूरपि ॥ ४४ ॥
या ज्येष्ठायामनूढायामूढाग्रेदिधिषूरसौ ।
पुनरूढा पुनर्भूस्स्यादूर्मिला त्यक्तभर्तृका ॥ ४५ ॥
देवरे विनियुक्ता या यात्यन्यं साभिसारिका ।
प्रसभा निरिणा मीढा निर्लज्जा धर्षणी च सा ॥ ४६ ॥
विस्तीर्णजानुर्विकटा नतजानुस्तु सिंहिका ।
दूषिका क्रोधविवशा पृषता श्वेतबिन्दुका ॥ ४७ ॥



अन्यानुरक्ता विगता नष्टा संस्पृष्टमैथुना ।
कन्याप्रसूतिजा जारी हारी नाम्नैव दूषिता ॥ ४८ ॥
हारिता पतितोत्पन्ना कोहली मुखरा भृशम् ।
जडा तु पाली कुब्जा तु दुर्दर्शा कालिकापि च ॥ ४९ ॥
धृष्टा प्रापणिका व्यंगा निघृष्टा कुत्सिता हता ।
अरणिर्निस्स्पृहा पालिर्हर्षुला विकला सरुक् ॥ ५० ॥
शरभा तु विशीर्णांगी स्वल्पदेहा मडूषिका ।
द्योता पिंगलकेशाक्षी ऋषभा वृषलक्षणा ॥ ५१ ॥
वर्षकारी स्ववत्पाणिपादा राता विहारिणी ।
सांकारिका तु पित्रादिगृहेष्वग्न्यादिदायिनी ॥ ५२ ॥
वैधव्यलक्षणोपेता पतिघ्नी खण्डनापि च ।
सुता त्वजीववत्साया मातुर्या सा विदूषिका ॥ ५३ ॥
विकटाद्यास्तु नोद्वाह्याः कन्यकास्सप्तविंशतिः ।
उपयामः परिणयो विवाहो दारसंग्रहः ॥ ५४ ॥
उद्वाहोपयमौ पाणिग्रहो जंबूलमालिका ।
कन्यादाने तु यद्दत्तं यौतकं यौतुकं च तत् ॥ ५५ ॥
गोपाली वर्णके शान्तियात्रावरनिमंत्रणे ।
दौन्दुभी वरयात्रायां धूलिभक्ते तु वार्तिकम् ॥ ५६ ॥
स्यादिन्द्राणीमहे हेलिरुलूलुर्मंगलध्वनिः ।
धोरी हुलिहुली चासौ सैव मंगलमालिका ॥ ५७ ॥
क्लीबे स्वस्त्ययनं पूर्णकलशे मंगलाह्निकम् ।
नन्दिकौ तोरणस्तंभौ शुककूटस्तयोस्स्रजि ॥ ५८ ॥
सैव वन्दनमालापि कुहलिः पूगपुष्पिका ।
हस्तसूत्रं प्रतिसरस्तद्बन्धे हस्तकोहलिः ॥ ५९ ॥

तद्ग्रन्थिस्त्ववका धानी करणं हस्तलेपनम् ।
उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते ॥ ६० ॥
वस्त्रमाल्यादि तत्पूर्णपात्रं पूर्णानकं च तत् ।
उत्सवो मह उद्धर्ष उद्धवो हर्षवेणुकः ॥ ६१ ॥
क्षणः पर्व च कल्याणं भोज्यं तु जठरोत्सवः ।
मधुपर्कस्तु निष्टंकश्शंखपात्रं तु पाटली ॥ ६२ ॥
यज्ञाध्ययनदानानि याजनाध्यापनग्रहाः ।
षट्कर्माणि महायज्ञा देवयज्ञादिपंचकम् ॥ ६३ ॥
निवापः पितृदानं स्यादामपात्रं तु वापिमम् ।
मृतस्नानमपस्नानं श्राद्धन्तु पितृभोजनम् ॥ ६४ ॥
दशाहे श्राद्धमाग्नेयं साज्यमेकादशेऽहनि ।
संप्रेषणी द्वादशेऽह्नि मासप्राप्तौ तु मासिकम् ॥ ६५ ॥
एवं त्रिपक्षी षाण्मासी ज्ञेया सांवत्सरीति च ।
गयायां पिण्डदानं यत् पितृकार्यं तदार्यकम् ॥ ६६ ॥
आम्रसेकस्तु यस्तत्र सा चारी सा पितृप्रपा ।
त्रिष्वातिथ्यमतिथ्यर्थं विघसो विप्रशेषितम् ॥ ६७ ॥
आवेशिकस्स्यादागन्तुरातिथ्यः प्राहुणोऽतिथिः ।
सूर्योढस्तु स संप्राप्तो यस्सूर्येऽस्तंगतेऽतिथिः ॥ ६८ ॥
अथाग्न्याधानमाधेयमाधानं चाग्निसंग्रहः ।
होमस्तु सवनं होत्रं हवनं हुतिराहुतिः ॥ ६९ ॥
अग्निहोत्रं नित्यहोमः कुत्सितास्त्वग्निहोत्रिणः ।
वीरोज्झप्रमुखास्तत्र वीरोज्झो न जुहोति यः ॥ ७० ॥
अग्निहोत्रं स्वयं वर्षमुत्सन्नाग्निस्तु वीरहा ।
अग्निहोत्रच्छलाद्याच्ञापरो वीरोपजीवकः ॥ ७१ ॥



वीरविड्डावको जुह्वत् धनैश्शूद्रसमाहृतैः ।
जातमात्रगृहीताग्निर्यस्स जातारणिर्द्विजः ॥ ७२ ॥
यस्यौपासन एवाग्निरेकाग्निः कालिपकश्च सः ।
अग्न्याहितस्त्वाहिताग्निर्नग्नः पुनरनग्निकः ॥ ७३ ॥
पर्याधाताग्रजेऽनग्नौ कृताधानोऽग्रजस्त्वसौ ।
पर्याहितस्तथा न्यायः परियष्टृपरीष्टयोः ॥ ७४ ॥
इज्याशीलो यायजूकस्सोमपीथी तु सोमपः ।
सुत्वा त्वभिषवादूर्ध्वं चितवानग्निमग्निचित् ॥ ७५ ॥
यष्टा तु यजुरादेष्टा यजमानश्च होत्ववत् ।
सोमे तु दीक्षितस्सोत्वो यज्वा स्यादिष्टवानसौ ॥ ७६ ॥
सर्ववेदास्स यो यागे दत्तसर्वस्वदक्षिणः ।
यज्ञत्यागी वृथाजातोऽपंचयज्ञो मलिम्लुचः ॥ ७७ ॥
याजका भरता यज्ञलिहः कुरव ऋत्विजः ।
यतस्रुचो देवयवो वाघतो वृक्तबर्हिषः ॥ ७८ ॥
अध्वर्यूद्गातृहोतारो ब्रह्मा चेति महर्त्विजः ।
मन्त्राणां दैवतं छन्दो निरुक्तं ब्राह्मणान्यृषीन् ॥ ७९ ॥
कृत्तद्धितादि चाज्ञात्वा यजन्तो यागकण्टकाः ।
याजयंतो लैंगधूमाः कौटास्तूभयकारिणः ॥ ८० ॥
प्रसर्पको दृशीकुश्च दर्शनायाध्वरं गतः ।
उपद्रष्टा सदस्यस्स्याच्छान्दसश्श्रोत्रियौ समौ ॥ ८१ ॥
अधीतसांगवेदो यस्सोऽनूचानो युगी गणिः ।
यज्ञो यागोऽध्वरस्स्तोमस्सप्ततन्तुर्मखस्सवः ॥ ८२ ॥
सहसानुर्यजः सानुर्वसुनो विश्वहर्यकः ।
पाकयज्ञाः पार्वणाद्या हविर्यज्ञास्त्वसोमकाः ॥ ८३ ॥

पशुबन्धास्तु पशवस्सोमास्सौम्याश्च सोमिनः ।
सवनेस्त्रिभिरेकाहास्तैरावृत्तैरहर्गणाः ॥ ८४ ॥
ते दीक्षितैः कृतास्सत्राण्यहीना याजकैः कृताः ।
अहीना द्वादशाहात् प्राक् सत्राण्यूर्ध्वं स तु द्वयः ॥ ८५ ॥
सर्वेऽमी यज्ञक्रतवस्त एवैन्द्राः प्रजागमाः ।
ज्योतिष्टोमश्चतुष्टोमो ज्योतिरानृण्यमित्यपि ॥ ८६ ॥
अग्निष्टोमादयस्संस्थाभेदास्सप्तास्य तन्तवः ।
सौमिकी दीक्षणीयेष्टिर्दीक्षा तु व्रतसंग्रहः ॥ ८७ ॥
प्रायणीयोदयनीयौ त्रिष्वाद्येऽन्त्ये च कर्मणि ।
पुरोडाशस्य प्रथने पणिकं प्रथिकैरुके ॥ ८८ ॥
प्रोक्षण्यासादनं दैष्टं पत्नीसन्नहनं स्पशा ।
स्रुचां सम्मार्जनं शुद्धिस्स्रुगासादनमाहुतिः ॥ ८९ ॥
हुतिराज्याधिश्रयणमाज्यावेक्षणमक्षतिः ।
स्यादिध्मप्रोक्षणं कार्ष्णशैत्यमाज्याधिवासनम् ॥ ९० ॥
वेद्यास्तरणमाप्रासः प्रस्तरस्स्तरणं छादिः ।
त्रैहोत्रं समिदाधानमदितिस्तासु सेचनम् ॥ ९१ ॥
पावकं सोमपानं स्यान्मिश्रकं तु घृतांजनम् ।
उपांशुस्तु प्राणिकस्स्यादन्तर्यामस्त्वपानिकः ॥ ९२ ॥
श्यैतनौधसयोर्गानं साम्रोरुपनिमंत्रणम् ।
व्यञ्जनाः पशुसंस्कारास्सामिकं त्वभिमंत्रणम् ॥ ९३ ॥
परंपराकं शमनं प्रोक्षणं च पशोर्वधे ।
अथ यज्ञोपकरणं यजत्रं यजनं च तत् ॥ ९४ ॥
होमधेनुस्त्वग्निहोत्री होमकाष्ठी तु नालिका ।
होमधूमस्तु निगणो होमभस्म तु वैष्णुतम् ॥ ९५ ॥



होमेन्धने स्यादिध्मोऽस्त्री पुमानेधस्समित् स्त्रियाम् ।
इन्धनं त्वेध आलाद्यमहोत्रं तु तृणेन्धनम् ॥ ९६ ॥
काष्ठेन्धनन्तु गरहं गोकरीषेन्धनं बुसा ।
यवादि त्वकृतं हव्यं तण्डुलास्तु कृताकृतम् ॥ ९७ ॥
अन्नादि कृतमामिक्षा दध्नोष्णं संयुतं पयः ।
पयस्या च क्षीरशरस्तन्मस्तुनि तु वाजिनम् ॥ ९८ ॥
सान्नाय्यं तु दधिक्षीरं पृषदाज्यं पृषातकः ।
पृषतोऽपि च दध्याज्ये पुरोडाशस्तु तृप्रकः ॥ ९९ ॥
हवनी स्रुक् स्रुचो भेदास्स्युर्जुहूरुपभृद्ध्रुवा ।
अथाग्निहोत्रहवणी श्रपण्याघारणस्स्रुवः ॥ १०० ॥
चमसोऽस्त्री त्रिपात्राणि वायव्यं सौमिके त्रिषु ।
परिप्लवार्थदण्डा स्रुक् दर्वी तु घृतलेखनी ॥ १०१ ॥
चमूः स्त्री चर्म सुत्यार्थं ग्रावाणस्त्वश्मयोऽश्मसु ।
विघनो घनो मुद्गरे नरःस्फचोद्घननन्दनाः ॥ १०२ ॥
यूपोऽस्त्री संस्कृतस्तंभो होमयूपस्तु शौभिकः ।
यूपावग्निषु पार्श्वस्थावुपस्थाविति संज्ञितौ ॥ १०३ ॥
अग्निष्ठं त्रिषु यूपादि यदग्नेस्संमुखे स्थितम् ।
यूपमध्यं समादानं यूपाग्रं तर्म न स्त्रियाम् ॥ १०४ ॥
कटकेऽस्य चषालोऽस्त्री मूले तूपरमक्षते ।
वेष्टनं तु परिव्याणं कुंबा सुगहना वृतिः ॥ १०५ ॥
यूपे सप्तदशारत्नावरत्निर्मैथिकोऽधरः ।
उत्तरेषां क्रमादाख्या उत्रासरस्वरुमोचनः ॥ १०६ ॥
तथाञ्जनो वैयथितः क्षालनश्शवशीर्षकः ।
सुधन्वो रथगरुतश्शैवालीककरञ्जकौ ॥ १०७ ॥

वासवो वैष्णवस्त्वाष्ट्रस्सौम्यो माधुरवेजनौ ।
संघातिकारणिर्न स्त्री कुशा वरुणकाष्ठिका ॥ १०८ ॥
खर्जनी कृष्णविषाणा वेदिर्भूमिः परिष्कृता ।
कुण्डं हवित्री हवनी कुण्डे स्याद्वर्तुले परम् ॥ १०९ ॥
वेदिस्त्रियां चतुष्कोणे त्रिकूटं तु त्रिकोणके ।
तस्मिन्नास्तावसंस्तावौ स्तुवते यत्र सामभिः ॥ ११० ॥
चात्वालोऽस्त्री मृत्खनस्स्यादुत्करोऽवकरालयः ।
शस्त्राण्युक्थानि सामानि स्तोत्राणि स्तुतयोऽपि च ॥ १११ ॥
याज्या पुरोनुवाक्या च याज्यापुटमिति द्वयम् ।
सौविष्टकृत्यौ संयाज्ये कूर्चालोलस्फुटी पशुः ॥ ११२ ॥
स्त्र्यांवृत् क्रमो विधिः कल्प उपकल्पोऽनुकल्पकः ।
पौर्वापर्यं त्वानुपूर्व्यं पर्यायोऽनुक्रमः क्रमः ॥ ११३ ॥
अनुपात्यय आवृत् स्त्री परिपाट्यानुपूर्व्यपि ।
पर्ययस्त्वतिपातस्स्यादतिक्रम उपात्ययः ॥ ११४ ॥
इष्टं यागात्मकं कर्म पूर्तं खातादिकर्मणि ।
आचारो वृत्तचारित्रचरित्रचरणानि च ॥ ११५ ॥
वृत्तस्याध्ययनस्यापि संपत्तिर्ब्रह्मवर्चसम् ।
पतनं सत्पथाद्भ्रंशः चर्या त्वीर्यापथस्थितिः ॥ ११६ ॥
हिंसाकर्माभिचारस्स्यान्मूलकर्म तु कार्मणम् ।
वशीकारस्संवननं विकर्माकार्यसेवनम् ॥ ११७ ॥
त्यागो दानं वितरणं विश्राणनविसर्जने ।
विहापनं निर्वपणं स्पर्शनं प्रतिपादनम् ॥ ११८ ॥
उत्सर्जनं प्रादेशनमपवर्जनमंहतिः ।
अतोयं सात्त्विकं दानमुदपूर्वं तु पौष्टिकम् ॥ ११९ ॥



आशिषा शान्तिकं दानं काम्यदानं प्रवापणम् ।
आशासनेऽर्थना याच्ञा याचनाध्येषणार्दना ॥ १२० ॥
भिक्षा च सनिरस्त्री स्यान्मार्गणा तु गवेषणा ।
पर्येषणा परीच्छा च मृगणान्वेषणा मृगः ॥ १२१ ॥
यस्तु नीलवृषोत्सर्गस्स षण्डो वृषपूतनः ।
उद्बंधवृषभश्चायमापिंगलक इत्यपि ॥ १२२ ॥
लोहितस्स्यान्नीलवृषः पुच्छशृंगखुरे सितः ।
यष्टिर्न स्त्री स्त्रियां मीना खनित्री तु विशाखिका ॥ १२३ ॥
बद्धदर्भो वेदयष्टिः कुण्डिका ना कमण्डलुः ।
वैखानसो वनेवासी वानप्रस्थश्च तापसः ॥ १२४ ॥
कापोतो वर्षमात्रस्य स वन्याहारसंग्रहात् ।
औदुंबरस्तु षाण्माससंग्रही तुर्यकालभुक् ॥ १२५ ॥
परे त्रिषु तपस्वी स्यात्तापसः पारिकांक्षिकः ।
चतुर्थकालिको भिक्षुर्व्युष्टिरष्टमकालभुक् ॥ १२६ ॥
चान्द्रायणरतश्चन्द्रव्रतिकस्सौमिकश्च सः ।
षष्ठकाली तु बलिको नौसो नक्षत्रकालिकः ॥ १२७ ॥
पुष्पाढ्यस्तु स्वयंशीर्णपुष्पमूलफलाशनः ।
भुङ्क्ते पक्षान्तयोरेव यो यवान् स द्विकालिकः ॥ १२८ ॥
शीर्णकश्शीर्णपर्णाशी वृक्षमूली तु मूलिकः ।
भूमौ विपरिवृत्यास्ते यस्स पातालमूलिकः ॥ १२९ ॥
वर्षवातातपानंगे बिभ्रदभ्रावकाशिकः ।
शिवव्रती स यो विप्रः पादेनैकेन तिष्ठति ॥ १३० ॥
रुद्रव्रती क्षत्रियश्चेद्वाताहारस्त्वहिव्रती ।
मत्स्यव्रती जलाचारस्तृणशय्यस्तु पर्णशः ॥ १३१ ॥

तथैव स्यात् स्थण्डिलश औलूकोंऽगारशाकटे ।
पाणिपात्रस्तु खपुटो दन्तोलूखलको व्युपः ॥ १३२ ॥
पिबत्यधोमुखो धूमं यस्स धुर्यावकर्तिकः ।
जानुभ्यां जानुकस्तिष्ठन्नष्टग्रासो मुनिव्रती ॥ १३३ ॥
पद्मासनी तु वसिकः क्षीराहारस्तु लोचकः ।
नीवारपिष्टकानष्टावश्नाति मुनिपिष्टकी ॥ १३४ ॥
एकांतर्येकांतरिती तथा कालावलोलकः ।
और्वव्रती जलाहारो घृताशी घृतभुग्घृती ॥ १३५ ॥
तपो व्रतोऽस्त्री कृच्छ्रोऽस्त्री तच्च चान्द्रायणादिकम् ।
चान्द्रायणं चन्द्रव्रतं प्राजापत्यं तु कृच्छ्रकम् ॥ १३६ ॥
प्राजापत्यं तु गोकृच्छ्रं कृतं गोमूत्रयावकैः ।
शिशुकृच्छ्रं कृतं पच्छः कृच्छ्रमद्भिस्तु यः कृतः ॥ १३७ ॥
कृच्छ्रः कृच्छ्रातिकृच्छ्रोऽसौ स्याद्वाहान्येकविंशतिम् ।
शिशुकृच्छ्रातिकृच्छ्रं तत्रिसन्ध्यं चेदपः पिबेत् ॥ १३८ ॥
प्राजापत्यं पाणिपात्रं पूर्णान्नेनातिकृच्छ्रकम् ।
तप्तकृच्छ्रं तदस्नानात् क्षीरसर्पिर्जलैः कृतम् ॥ १३९ ॥
एकैकं त्र्यहमभ्युष्णैश्शीतैस्तैश्शीतकृच्छ्रकम् ।
बिल्वेन मासं श्रीकृच्छ्रं मूलकृच्छ्रं बिसाशनात् ॥ १४० ॥
पानेन सांबुसक्तूनां मासं वरुणकृच्छ्रकम् ।
त्रिस्सप्ताहं पयःपानं क्वचित् कृच्छ्रातिकृच्छ्रकम् ॥ १४१ ॥
पिण्याकाचामतक्रांबुसक्तून् भुक्त्वा क्रमादहः ।
उपोष्य सौम्यकृच्छ्रं स्याज्जलाचामौ विनैव वा ॥ १४२ ॥
स्यात्तुलापुरुषोऽभ्यासादेकैकस्य दिनत्रयम् ।
सौम्यस्य तु द्विरभ्यासात् स्यात्तुलापुरुषश्शिशोः ॥ १४३ ॥



उपवासस्तूपवस्तुस्सन्यासस्स्यादनाशकम् ।
द्वादशाहे पराको ना षोडशाहे तुरायणम् ॥ १४४ ॥
तुरायणद्वये सौम्यं चातुर्मास्ये परायणम् ।
पारायणं जलेनैतत् क्षीरेणैतत् परावसु ॥ १४५ ॥
एकान्तरितमर्धाशं षष्ठकालेषु षाष्ठिकम् ।
गोमूत्रयावकैर्मासो वज्रोऽस्त्री यावकैः पुनः ॥ १४६ ॥
त्र्यहं वज्राभिषवणं पयसा तु पयोव्रतम् ।
पञ्चरात्रं पयःपानं संगमस्संगतश्च सः ॥ १४७ ॥
मासं गोष्ठे पयःपानं गोव्रतं व्राजिकं च तत् ।
पिबेत् ब्रह्मसुवर्चलामुपोष्योपस्करव्रतम् ॥ १४८ ॥
कणान्नस्यैव भोजनं द्वादशाहं वसुव्रतम् ।
कुशापीडः कुशवटो व्रतिनामासनं ब्रसी ॥ १४९ ॥
योगपट्टस्तु चीना स्यात् पर्यस्तिरवसक्थिका ।
ऋषिस्त्रिकालदर्शी स्यान्मौनी वाचंयमो मुनिः ॥ १५० ॥
अगस्त्यः कलशीपुत्रस्तपनः पीतसागरः ।
और्वशेयः कुंभयोनिरगस्तिर्विन्ध्यकूटकः ॥ १५१ ॥
मैत्रावरुणिराग्नेयो मुनिर्वातापिसूदनः ।
दक्षिणाशारतः क्वाथिरस्तस्याग्निश्चाग्निमारुतः ॥ १५२ ॥
तस्य कौषीतकी भार्या लोपामुद्रा वरप्रदा ।
प्राचेतसस्तु वाल्मीकिर्वाल्मीकश्च कुशी कविः ॥ १५३ ॥
सालातुरीयको दाक्षीपुत्रः पाणिनिराहिकः ।
हलभूतिस्तूपवर्षः कृतकोटिकविश्च सः ॥ १५४ ॥
याज्ञवल्क्यस्तु योगांजिर्योगेशो ब्रह्मरात्रिकः ।
आपवस्तु वसिष्ठस्स्याद्यज्ञाढ्यस्तु पराशरः ॥ १५५ ॥

गौतमस्तु शतानन्दो यवक्रीतस्तु रोहितः ।
यायावरो जरत्कारुर्दुर्वासास्तु कुशारणिः ॥ १५६ ॥
अष्टावक्रस्तु गर्भाजिद्दृढच्युच्चिध्मवाहकः ।
मत्स्यगुश्च्यवनोऽथ स्यात् गोनर्दीयः पतंजलिः ॥ १५७ ॥
अथ व्यालिर्विन्ध्यवासी नन्दनीनन्दनोऽपि च ।
कात्यायनो वररुचिर्मेधजिच्च पुनर्वसुः ॥ १५८ ॥
वात्स्यायनस्तु कौटिल्यो विष्णुगुप्तो वराणकः ।
द्राविलः पक्षिलः स्वामी मल्लनागोऽगुलोऽपि च ॥ १५९ ॥
यतिः पाराशरी भिक्षुः परिव्राट् पाररक्षिकः ।
अनाशकी प्रव्रजितः कर्मन्दी मस्करी यती ॥ १६० ॥
परमात्मा परो ब्रह्म जीवः क्षेत्रज्ञ आविशः ।
शक्तिस्तु माया प्रकृतिर्व्योमाख्यं मूलकारणम् ॥ १६१ ॥
असदक्षरमव्यक्तं तमस्सदसदात्मकम् ।
अलिंगं गुणसामान्यं गुणास्सत्त्वं रजस्तमः ॥ १६२ ॥
महांस्तु लैंगिको ब्रह्मा लिंगज्येष्ठश्च चेतना ।
मनीषा शेमुषी बुद्धिर्धीः पूः ख्यातिर्विदा बुधा ॥ १६३ ॥
ज्ञप्तिः पण्डोपलब्धिस्तु संवित्तिरनुभूश्चितिः ।
अवगत्यनुभूती चिज्ज्ञप्तिर्ज्ञानं च बोधनम् ॥ १६४ ॥
षोढा धीस्तत्त्वधीः पण्डा मेधा धीर्धारणक्षमा ।
ऊहापोहक्षमा चार्वी गृहीतिर्ग्रहणक्षमा ॥ १६५ ॥
शुश्रूषाबहुला श्रौषिश्श्रवणज्ञा तु चत्वरी ।
धृतिस्तु तुष्टिस्संतोषः प्रौढिस्स्तु कियदेतिका ॥ १६६ ॥
यत्नोत्साहोद्यमायामास्तरीषोऽध्यवसायवत् ।
वैराग्यं मर्दमुद्वेगो निर्वेदश्च विरागवत् ॥ १६७ ॥



धर्मोऽस्त्री सुकृतं पुण्यं पाप्माधर्मौ तु दुष्कृतम् ।
दुरितं पातकं पापं त्रस्तमंहोऽघकल्मषे ॥ १६८ ॥
स्मयोऽभिमानोऽहंकारो गर्वः स्त्री गर्विरस्मिता ।
शौटीर्यश्चाथ शृंगारगर्वे घंघोरवेंघरौ ॥ १६९ ॥
आहोपुरुषिका सा यत् गर्वादात्मानि गौरवम् ।
अहं पूर्वमहं पूर्वमित्यहंपूर्विकोन्नतिः ॥ १७० ॥
सा स्यादहमहमिका योऽहंकारः परस्परम् ।
अत्याकारः परिभवस्तिरस्कारोऽप्यनादरः ॥ १७१ ॥
रीडावमाननावज्ञाप्यवहेलमसूर्क्षणम् ।
उच्चलं मानसं चेतश्चित्तमुच्चलितं मनः ॥ १७२ ॥
स्वान्तं गूढपदं हृच्च संकल्पो मानसी क्रिया ।
मनो बुद्धिरहंकार इत्यंतःकरणं त्रिधा ॥ १७३ ॥
आकूतिर्मतमाकूतं भावोऽभिप्राय आशयः ।
चित्ताभोगो मनस्कार उत्प्रेक्षा स्वमनीषिका ॥ १७४ ॥
मीमांसा तु विजिज्ञासा प्रत्यग्दृष्टिर्विकुण्ठना ।
तर्कमूलिकसम्मर्श ऊहो न क्त्र्यूहना न ना ॥ १७५ ॥
संभावना स्यादाशंका वितर्कस्तर्कमस्त्रियाम् ।
प्रतिभा प्रतिभासस्स्यान्निर्णयोऽतश्च निश्चयः ॥ १७६ ॥
विचिकित्सा तु सन्देहस्संशयो विशयो भ्रमः ।
विस्मरणं प्रस्मरणमुन्मादश्चित्तविभ्रमः ॥ १७७ ॥
तन्द्रा कौसीद्यमालस्यं प्रमादोऽनवधानता ।
स्यादायल्लकमौत्सुक्यमुत्कण्ठोत्कलिका रतिः ॥ १७८ ॥
हल्लेखो रणरणकोऽप्यभिध्या विषमस्पृहा ।
तृषिः कांक्षा स्पृहेहेच्छा वांछा कामो मनोरथः ॥ १७९ ॥

अभिलाषश्च लिप्सा तु धनायेप्सा च गर्धना ।
गर्भिण्याः पुनरिच्छायां श्रद्धा दोहलदौहृदे ॥ १८० ॥
रागोऽनुरागोऽनुरतिर्वीक्षायां मोहविस्मयौ ।
शोषुर्ना शुषिकोदन्या पिपासाप्यपलासिका ॥ १८१ ॥
बुभुक्षेच्छाशनाया क्षुज्जिघत्साशिशिषा पचिः ।
राज्यलौल्यं तु कौहोलं तपसीच्छा प्रशान्तिकम् ॥ १८२ ॥
शोकस्तु मन्युरुत्खेदश्शुक् स्त्री दैन्यानुशोचने ।
क्रोधः कोपोऽमर्षरोषौ रुषा रुट्क्रुत्क्रुधाः स्त्रियः॥ १८३ ॥
मर्षः क्षमा तितिक्षा स्यादसूया दोषदृग्गुणे ।
वैरं विरोधो विद्वेष ईर्ष्या मात्सर्यमुन्नते ॥ १८४ ॥
तंकोऽस्त्री भीर्भिया भीतिस्साध्वसं भयनं भयम् ।
विप्रतिसारेऽनुशयः पश्चात्तापोऽनुतापवत् ॥ १८५ ॥
स्नेहोऽस्त्री प्रेम सौहार्दमजय्यं हार्दसौहृदे ।
आनन्दनं संगतं स्यादप्रच्छन्नं सभाजनम् ॥ १८६ ॥
सख्यं साप्तपदीनं स्यात् कौतुकं तु कुतूहलम् ।
कौतूहलं विनोदश्च दुःखं पीडाव्यथार्तयः ॥ १८७ ॥
शंभरस्तु मदो हर्षः प्रमोदो मोदसम्मदौ ।
आनन्दो नन्दथुर्ह्लादस्तृप्तिमुन्नन्दिहृष्टयः ॥ १८८ ॥
शर्म शातं सुखं सौख्यमयश्शुभफलो विधिः ।
विधौ दैवं दिष्टभाग्ये विपाको भवितव्यता ॥ १८९ ॥
उपलिंगं त्वरिष्टं स्यादजन्यं डिंबविप्लवौ ।
डमरोपप्लवोत्पाता उपसर्ग उपद्रवः ॥ १९० ॥
संपत्संपत्तिलक्ष्म्यौ श्रीर्विपत्तिर्विपदापदौ ।
अवसादस्तु सादस्स्याद्विषादश्च श्लिकुर्ना ॥ १९१ ॥



उग्रता तूग्रिका रौद्री करुणा तु दया कृपा ।
घृणानुकंपानुक्रोशः कारुण्यं चाथ कौक्कुटे ॥ १९२ ॥
क्लेशायासौ जुगुप्सा तु हृणीया हृणिया घृणा ।
ऋतिः कुत्साप्युपक्रोशो गर्हा दोषश्च गर्हणा ॥ १९३ ॥
मन्दाक्षं ह्रीस्त्रपा लज्जा व्रीला सापत्रपान्यतः ।
हासिका तु हसो हासो हसनं हास्यघर्घरे ॥ १९४ ॥
व्याजो मिषं छलं छद्म निभं च कपटोऽस्त्रियाम् ।
दंभो दंडाजिनं कूटं दौन्दुभिश्छन्दनोपधा ॥ १९५ ॥
रेभटिः कुक्कुटिर्मिथ्याचर्या च परिकल्पना ।
जागरितं जागरणं जागर्या जागरा न षण् ॥ १९६ ॥
प्रमीला तामसी तन्द्रा स्वापस्तु स्वप्नसंशयौ ।
निद्रा गुडाका सुप्तं च स्वप्नस्त्वेवात्र दर्शनम् ॥ १९७ ॥
संस्कारमात्रजस्स्वप्नः कामिको रसकोऽपि च ।
अदृष्टजस्त्वत्र चाग्रो दोषजस्त्वांगलौकिकः ॥ १९८ ॥
प्रदोषे बलकस्स्वप्नो निशीथे लोचमालकः ।
नचकोऽपररात्रे स्यात् सद्यःपाको निशात्यये ॥ १९९ ॥
नन्दीमुखी श्वासहेतिस्सुषुप्तिस्सुखसुप्तिका ।
मूर्छा तु मूर्छना मौढ्यं वैचित्त्यं कश्मलं लयः ॥ २०० ॥
कालधर्मस्तु दिष्टान्तो निपातो गमिरन्धकः ।
कठमोषो भूमिलाभो दीर्घनिद्रा निमीलनम् ॥ २०१ ॥
पंचत्वं मरणं मृत्युरस्त्री स्यादमतोऽस्त्रियाम् ।
सर्वलोकतते मृत्यौ मारिः स्त्री मारकोऽस्त्रियाम् ॥ २०२ ॥
हृषीकमिन्द्रियं प्राणः प्राणा ना भूम्नि चासवः ।
प्राणापानादयस्त्वस्य वृत्तयः पंच वायवः ॥ २०३ ॥

श्वासस्तु श्वसितं सोऽन्तर्मुख उच्छ्वास आहरः ।
आनश्चाथ बहिर्वृत्तो निश्वासः पान एतनः ॥ २०४ ॥
स्थिरस्त्वाश्वास एती च स्यादूवद्धचं गुदानिले ।
तन्मात्राण्यविशेषास्स्युर्विशेषाः पञ्च खादयः ॥ २०५ ॥
महाभूतानि भूतानि लोको भुवनविष्टपे ।
मर्त्यलोको जीवलोको मर्तोऽप्यथ भुवोऽव्ययम् ॥ २०६ ॥
स्वर्महश्च क्रमाल्लोका महरेव महानपि ।
प्राजापत्यो जनस्तस्मात् गोलोकस्तु तपो नपुम् ॥ २०७ ॥
ब्रह्मलोकस्सत्यलोकस्तत्र पुर्यपराजिता ।
योगस्त्वाध्यात्मिकोऽथासावष्टांगोऽङ्गैर्यमादिभिः ॥ २०८ ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यमसंग्रहः ।
यमास्स्युर्नियमाश्शौचसंतोषतपआदयः ॥ २०९ ॥
आसनं करणं तस्य भेदाः पद्मासनादयः ।
उत्तानौ चरणावूर्वोर्न्यस्येन्नाभौ करद्वयम् ॥ २१० ॥
दक्षिणोत्तरमुत्तानं घ्राणदृक् पद्मकासनी ।
अर्धपद्मासनन्त्वेकपाद ऊरोरधःस्थिते ॥ २११ ॥
निगूढचरणन्तूर्वोरधश्चेच्चरणावुभौ ।
पादोपवेशस्त्वन्वर्थस्संयुज्य पदयोस्तले ॥ २१२ ॥
ते चत्वारोऽपि पर्यंकाः पृष्ठवंशशिरोधरम् ।
नियम्य मीलिताक्षश्चेत्पर्यस्तिकरणेन वा ॥ २१३ ॥
नागदन्तकमूर्ध्वज्ञोर्जानुस्थौ प्रसृतौ भुजौ ।
सूचीमुखमिदं पाणितलौ चेत् संहतौ मिथः ॥ २१४ ॥
अर्धसूची तु तौ द्वौ चेत् प्रादेशान्तरतो मुखात् ।
कुड्मलम्मुकुलीभूतौ तौ चेदूर्ध्वमुखौ स्थितौ ॥ २१५ ॥



अस्पृष्टौ नागदन्तस्य स्फिचौ चेद्ध्रुवमुत्कटम् ।
बहिरत्रकर्णस्संयुज्य जंघायुग्मप्रसारणात् ॥ २१६ ॥
एष पादप्रसारोऽपि स्यादथो मरणालसम् ।
बस्तिशुण्डकमप्यस्य जंघैका चेत् प्रसारिता ॥ २१७ ॥
अर्धनाकुलमूर्ध्वज्ञोर्जंघे बद्धे भुजेन चेत् ।
द्वाभ्यां चेन्नाकुलं दोर्भ्यामथ वज्रासनं यदि ॥ २१८ ॥
जंघे पद्मासनावस्थे तत्संधिनिहितौ करौ ।
ताभ्यामेव स्थितौ भूमावंतरिक्षासनं च तत् ॥ २१९ ॥
गोधासनं तदेकेन स्थितश्चेत् पाणिना भुवि ।
पद्मासनस्य पदयोः पाणिना पृष्ठगामिना ॥ २२० ॥
वामेन दक्षिणांगुष्ठं वामं चान्येन पीडयेत् ।
वेतालासनमित्येतदेकांगुष्ठग्रहात् किणः ॥ २२१ ॥
कर्णयोर्जानुपार्श्वाभ्यां स्पर्शे जानुनिकुंचनम् ।
भुजवेष्टितजंघोरोश्चूलिकाश्लेषितावनेः ॥ २२२ ॥
पृष्ठतो भुजपाशश्चेन् मृत्युसंयमनोऽपि सः ।
बिन्दुभेदोऽप्यधो जानुसन्ध्योः पादप्रवेशनात् ॥ २२३ ॥
स्वस्तिकोऽथ समस्थानं पादौ कुंचितसंपुटौ ।
आसीनस्यासनान्येतान्यथ सुप्तस्य साम्प्रतः ॥ २२४ ॥
गवादीनान्निषण्णानां स्याद्गोनिषदनादिकम् ।
उत्तानस्योर्ध्वपादत्वमित्येतट्टिट्टिभासनम् ॥ २२५ ॥
दण्डासनादिभेदेन पंचधा स्यात् स्थितासनम् ।
दण्डासनं स्यादन्वर्थं यत्र दण्डवदुत्थितः ॥ २२६ ॥
स्याद्वीरासनमुत्पादः कृत्वा भूमौ शिरः स्थितः ।
दुर्योधनासनमपि मृत्युसंयमनोऽपि सः ॥ २२७ ॥

दण्डपद्मासनं तस्मिञ्जंघे पद्मासनोचिते ।
त्रिविक्रमासनं तार्क्ष्यासनमित्यपि साम्यतः ॥ २२८ ॥
प्राणायामः प्राणयम उत्खातो मानमस्य यत् ।
छोटिकास्त्रिः परामृश्य जानुस्फोटक्रियाथ ताः ॥ २२९ ॥
षट्त्रिंशन्मन्द उत्खातो द्विगुणत्रिगुणौ पुनः ।
मध्यमश्चैवोत्तमश्च प्रथमो द्वादशैव वा ॥ २३० ॥
प्रत्याहारस्त्विन्द्रियाणां विषयेभ्यस्समाहृतिः ।
धारणा तु क्वचिद्ध्येये चित्तस्य स्थिरबन्धनम् ॥ २३१ ॥
ध्यानं तु विषये तस्मिन्नेकप्रत्ययसंततिः ।
समाधिर्ना तदेवार्थमात्राभासनरूपकम् ॥ २३२ ॥
प्रयुक्तं धारणाद्येतत्त्रयमेकत्र संयमः ।
ओंकारः प्रणवस्तारस्तारकं सर्वविन्मतिः ॥ २३३ ॥
विद्वान् सन् कोविदस्सूरिर्मेधावी पण्डितो बुधः ।
सुधीर्विपश्चित् संख्यावान् प्राज्ञो धीमान्विचक्षणः ॥ २३४ ॥
दीर्घदर्शी दूरदर्शी लब्धवर्णो मनीष्यपि ।
त्रिवर्गो धर्मकामार्थाश्चतुर्वर्गस्समोक्षकाः ॥ २३५ ॥
सबलैस्तैश्चतुर्भद्रश्शास्त्रीयं तु फलं गतिः ।
सांदृष्टिकं फलं सद्यः कार्यं कृत्यं प्रयोजनम् ॥ २३६ ॥
प्राप्तिरैक्येन सायुज्यं सार्ष्टिरैश्वर्यतुल्यता ।
ब्रह्मभूयं ब्रह्मभावो देवभूयादिकं तथा ॥ २३७ ॥
अमृतत्वं तु कैवल्यं मुक्तिर्मोक्षोऽपुनर्भवः ।
मोक्षावलंबिनः प्रायः पाषण्डा बाह्यलिंगिनः ॥ २३८ ॥
ते च हेरुकशोभाद्याः प्रोक्ताष्षण्णवतिः क्वचित् ।
दशोत्तरं शतं कैश्चित् पाषण्डानां प्रदर्शितम् ॥ २३९ ॥



शतत्रयं षष्ट्यधिकमुक्तं चीनेशसंसदि ।
वेषाजीवकृतान्ताद्यैस्तेषां भेदः परस्परम् ॥ २४० ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
भूमिकाण्डे ब्राह्मणाध्यायः)

## क्षत्रियाध्यायः

क्षत्रं बाहुजराजन्यौ भूशक्रः क्षत्रियो विराट् ।
राजा तु पार्थिवो भूभुग्राड् भूपो नृपतिर्नृपः ॥ १ ॥
नरेन्द्रो नरदेवश्च वश्यामात्यस्त्वधीश्वरः ।
सार्वभौमश्चक्रवर्ती नृपोऽन्यो मण्डलेश्वरः ॥ २ ॥
स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ।
राज्यांगानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥ ३ ॥
गुणास्सांग्रामिकास्सर्वे स्वामिनस्त्वाभिगामिकाः ।
इन्द्रव्रतादयश्चाष्टौ संपत्तिर्विपदोऽपराः ॥ ४ ॥
तत्र याश्शक्तयस्तिस्रः प्रभावोत्साहमंत्रजाः ।
षाड्गुण्यमस्त्राद्यभ्यासो गुणास्सांग्रामिका इमे ॥ ५ ॥
षड्गुणा आसनं यानं द्वैधं विग्रह आश्रयः ।
सन्धिश्चेन्द्रयमादीनां वृत्तमिन्द्रव्रतादिकम् ॥ ६ ॥
अथ विद्यार्जनं दानमष्टवर्गस्य वर्धनम् ।
द्विकपञ्चकषट्कानां विजयस्सप्तवर्जनम् ॥ ७ ॥
उपायनैपुणं धर्मे इत्याद्याश्शोभनाः क्रियाः ।
दृष्टादृष्टोदयार्था यास्ते गुणा आभिगामिकाः ॥ ८ ॥
तत्राष्टवर्ग आरंभः कृषिस्सेतुर्वणिक्पथः ।
खनिस्थानं वनच्छेदो दुर्गं शून्यनिवेशनम् ॥ ९ ॥
द्विकं तु मनआत्मानाविन्द्रियाणि तु पञ्चकम् ।
षट्कं कामो मदो मानो लोभो हर्षो रुषापि च ॥ १० ॥
मृगयाक्षास्स्त्रियः पानं वाक्पारुष्यार्थदूषणे ।
दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम् ॥ ११ ॥



मुख्योपायास्तु सामाद्याः क्षुद्रोपायाः पुनस्त्रयः ।
मायोपेक्षेन्द्रजालं चेत्येते माया तु शांबरी ॥ १२ ॥
इन्द्रजालं तु कुहकमुपेक्षा त्ववधीरणम् ।
उपजापस्तु भेदस्स्यात् साम सांत्वं च सांत्वनम् ॥ १३ ॥
तंत्रं स्वराष्ट्रचिंता स्यादावापस्त्वरिचिंतनम् ।
अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम् ॥ १४ ॥
राज्ञामहिभयं तु स्यात् स्वपक्षप्रभवं भयम् ।
हैमं सिंहासनं भद्रासनं त्वन्यन्नृपासनम् ॥ १५ ॥
छत्रं स्यादातपत्रं तन्नृपलक्ष्म नृपस्य चेत् ।
अभिसारस्त्वनुचरस्सहायोऽनुप्लवोऽनुगः ॥ १६ ॥
सेवकश्चानुजीवी च यस्तु केलिसहायकः ।
वैहासिकः केलिकिलस्तस्मिन् हासनिकोऽपि च ॥ १७ ॥
सामन्ता राज्यसंधिस्था आरक्षाः पुररक्षिणः ।
मन्त्र्यमात्यौ तु धीकर्मसहायेऽतः परे त्रिषु ॥ १८ ॥
अध्यक्षस्स्यादधिकृतस्स्थाने चेत् स्थानिको ह्यसौ ।
क्षुद्रोपकरणेषु स्यादध्यक्षः पारिकर्मिकः ॥ १९ ॥
कुमारोऽमात्यको मन्त्री वर्गे धर्मे तु धार्मिकः ।
हट्टे धीकर्मिकः पुर्यां चोरिको दंडपाशिकः ॥ २० ॥
रजते नैष्किको ग्रामे स्थायुको हेम्नि भौरिकः ।
महानसे पौरोगवो दण्डपालोऽखिल बले ॥ २१ ॥
अन्तःपुरेऽन्तर्वंशिको गोपो ग्रामेषु भूरिषु ।
कालिकोऽधिकृतश्शुल्के सौविदल्लस्तु सौविदः ॥ २२ ॥
स्थापत्यकञ्चुक्यार्याश्च षण्डो वर्षवरस्समौ ।
प्रदेष्टा पञ्चजनीनो भाण्डागारिक इत्यपि ॥ २३ ॥

दौवारिको वेत्रधरो द्वास्स्थः क्षत्ता च दर्शकः ।
द्वारपाले पुरोधास्तु सौवस्तिकपुरोहितौ ॥ २४ ॥
मौहूर्तिकमौहूर्तज्यौतिषिकज्ञानिगणकदैवज्ञाः ।
सांवत्सर आदेशी कार्तांतिक इत्यमी तुल्याः ॥ २५ ॥
यथार्हवर्णो मंत्रज्ञो भीमरो गूढपूरुषः ।
चारोऽप्यथ वणिग्भिक्षुश्छात्रो लिंगी कृषीवलः ॥ २६ ॥
इति संस्थाचराः पंच तत्र भिक्षुरुदास्थितः ।
कृषीवलो गृहपतिश्छात्रे कापटिकश्चरे ॥ २७ ॥
संचारास्त्वपरे चारास्स्थितास्संस्थाचरेषु ये ।
तीक्ष्णोऽतिहिंसनश्शूरश्छत्री छद्मप्रधारवान् ॥ २८ ॥
अपसर्पाः कर्मकरव्याजात् स्थाने वसन्ति ये ।
वार्तिकस्सन्देशहरो दूतस्सांदेशिको रभूः ॥ २९ ॥
वैतालिको बोधकरो वन्दी तु स्तुतिपाठकः ।
मागधो मधुको घण्टाताडे घाण्टिकचातिकौ ॥ ३० ॥
कृताभिषेका महिषी महादेव्यप्यथापरा ।
देवी राजकुलोत्था चेत् परिवृक्ती तु पूजिता ॥ ३१ ॥
वावाता तु प्रियतमा स्वामिनी त्वनृपात्मजा ।
फालाकली युद्धजिता नृपस्योढाः प्रिया इमाः ॥ ३२ ॥
अनूढास्तु प्रिया राज्ञः कलाज्ञा गणिकास्स्मृताः ।
गणिका सा प्रगणिका यानाप्तपरिचारिका ॥ ३३ ॥
आज्ञा स्यादाज्ञागणिका या राज्ञाप्तपरिच्छदा ।
अथालगन्धिकाप्याज्ञागणिका कुलसंभवा ॥ ३४ ॥
या तु भोगाय वेश्यात्वं गता वैषयिकीति सा ।
बन्धकी तु गता वेशमर्थायानाप्तसत्कृतिः ॥ ३५ ॥



शय्यास्त्रग्भूषणादौ तु नियुक्ता परिचारिका ।
सञ्चारिका महाकार्ये कथायां द्रविणादिषु ॥ ३६ ॥
विचारिका तूपवनकक्षान्तरविचारिणी ।
आशीस्स्वस्त्ययनाभिज्ञा या वृद्धा सा महत्तरी ॥ ३७ ॥
प्रतिहारी तु राजानं संभावयति या सदा ।
आयुक्तिविनियुक्ता या सा तांबूलकरंगिका ॥ ३८ ॥
असिक्न्यन्तःपुरप्रेष्यानाप्तभोगा कुमारिका ।
विषयानन्तरो राजा शत्रुर्मित्रमतः परम् ॥ ३९ ॥
उदासीनः परस्तस्मात् पार्ष्णिग्राहस्तु पृष्ठतः ।
शत्रुर्दस्युरमित्रारी अरातिरहितो द्विषन् ॥ ४० ॥
द्वेषणः प्रत्यनीको द्विड् जिघांसुर्हिंसनो रिपुः ।
सपत्नोऽसहनो वैरी दूषकश्शात्रवः परः ॥ ४१ ॥
प्रत्यर्थी पर्यवस्थाता प्रतिपक्षो विपक्षकः ।
दुर्हृद्द्वेष्यभियातिश्च परिपन्थी विरोध्यपि ॥ ४२ ॥
मित्रं नपुं त्रिषु स्निग्धवयस्येष्टहितप्रियाः ।
निजात्मीयाप्तसुहृदस्सहायस्सद्रुचिस्सखा ॥ ४३ ॥
कोशोऽर्थसंचयो राज्ञां भाण्डान्यर्था हि कोशगाः ।
आयोदयौ धनोत्पत्तौ तत्क्षयेऽपचितिर्व्ययः ॥ ४४ ॥
पर्याहारः प्रजास्वायो भागधेयो बलिः करः ।
उपदा तूपहारस्स्यादुपग्राह्यमुपायनम् ॥ ४५ ॥
प्रदेशनं प्राभृतञ्च लम्बा तूत्कोच आमिषः ।
दण्डो दमस्साहसोऽस्त्री द्विपाद्यो द्विगुणो दमः ॥ ४६ ॥
अपराधो मन्तुरेनः स्वसृमं विप्रियागसी ।
अपवादस्तु निर्देशो निदेशश्शासनं तथा ॥ ४७ ॥

शिष्टिराज्ञाप्यथ न्यायो देशरूपं समंजसम् ।
राष्ट्रं तु विषयस्सोऽपि युक्तो ग्रामैश्शताधिकैः ॥ ४८ ॥
उपवर्त्तनमप्यस्मिन्मण्डलं तैश्शताधिकैः ।
दुष्प्रापं तु पुरं दुर्गं यत्रशैलजलादिभिः ॥ ४९ ॥
वारकादीनि यन्त्राणि परिखाया बहिर्भुवि ।
पादुका कण्टकी गर्तः पांसुच्छन्नो महापथे ॥ ५० ॥
तलयन्त्रं क्षुराकारं यदि वा क्रकचोपमम् ।
श्वदंष्ट्रार्गलशृंगाटमण्डूकाद्यन्वितार्थकम् ॥ ५१ ॥
शरभा जानुमात्री दा दारुजा जानुभंजिनी ।
अवपातस्तु हस्त्यर्थो गर्तश्छन्नस्तृणादिना ॥ ५२ ॥
स्यात्कण्टकप्रतीसारा रज्जुः कण्टकसंचिता ।
अहिपृष्ठं तु निर्मांसपृष्ठास्थ्याभमयोमयम् ॥ ५३ ॥
उपस्करप्रस्खलिनी भूमिस्स्थपुटपिच्छिला ।
छन्नैरेतैश्छन्नपथं सुरुंगादिः कृतश्च यः ॥ ५४ ॥
सैन्यं चक्रं बलं सेना चमूर्वाहिन्यनीकिनी ।
पताकिनी च पृतना ध्वजिनी च वरूथिनी ॥ ५५ ॥
सैन्यं तु भिन्नकूटं तन्नष्टावांतरनायकम् ।
शून्यमूलं तदस्थानमन्तश्शल्यं तदोषकम् ॥ ५६ ॥
त्रिहयं पंचपादातं यदेकरथकुंजरम् ।
सैन्यं सा पत्तिरेतस्यास्त्रैगुण्यात् स्युर्यथाक्रमम् ॥ ५७ ॥
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।
अनीकिनीत्यनीकिन्यः पुनरक्षौहिणी दश ॥ ५८ ॥
प्रत्यासारश्चमूपार्ष्णिस्सज्जनं तूपरक्षणम् ।
हस्त्यश्वरथपादातं बलं स्याच्चतुरंगकम् ॥ ५९ ॥



इभो मतंगजो हस्ती दन्ती कुंभी करी रदी ।
स्तंबेरमो गजो गर्जो द्विरदोऽनेकपो द्विपः ॥ ६० ॥
दन्तावलो महाकायो वारणः कुंजरोऽसुरः ।
महामृगश्शूर्पकर्णस्सामजस्सिंधुरः कपिः ॥ ६१ ॥
मदवृन्दः कुषी कंबुश्शुण्डालष्षष्टिहायनः ।
भद्रो मन्द्रो मृग इति गजास्संकरजास्तथा ॥ ६२ ॥
अंगप्रत्यंगभद्रत्वं संक्षिप्तं भद्रलक्षणम् ।
पृथुत्वं श्लथता स्थौल्यं संक्षिप्तं मन्द्रलक्षणम् ॥ ६३ ॥
तनुप्रत्यंगदीर्घोच्चप्रायो मृगगणो मृगः ।
भद्रमन्द्रो भद्रमृगो भद्रमन्द्रमृगोऽपि च ॥ ६४ ॥
मन्द्रभद्रादयोऽप्येवमिति संकरजा नव ।
ऊर्ध्वाधःकायभेदात्ते द्विधेत्यष्टादशोदिताः ॥ ६५ ॥
पञ्चवर्षो गजो बालः पोतस्तु दशवर्षकः ।
त्रिंशद्वर्षस्तु कलभो विक्को विंशतिवर्षकः ॥ ६६ ॥
कालेऽप्यजातदन्तश्च स्वल्पांगोऽपि च मक्कणः ।
आज्ञाकृद्विनयग्राही यूथनाथस्तु यूथपः ॥ ६७ ॥
लग्नो मदकलो मत्तः प्रभिन्नोऽप्यथ निर्मदः ।
उद्वान्तोऽसौ परिणतस्तिर्यग्दन्तप्रहारकः ॥ ६८ ॥
औपवाह्यो राजवाह्यस्सन्नाह्यस्समरोचितः ।
स्थूलह्रस्वरदोऽसोढ ईषादन्त उदग्रदन् ॥ ६९ ॥
करेणुः करिणी धेनुः कल्पना सज्जना घटा ।
गण्डूषको बहिष्कर्षस्संभोगश्चातिहस्तकः ॥ ७० ॥
स्थूलहस्तः फलीहस्तः पृथुहस्त इति क्रमात् ।
उपर्येते गजांगुल्याः प्रदेशास्सा तु कर्णिका ॥ ७१ ॥

आकर्षः परिकर्षश्च बहिष्कर्षस्य पार्श्वयोः ।
किरीटी दंतमूलं स्यात् प्रवेष्टस्तु ततः परम् ॥ ७२ ॥
मध्येमुखं तु वाहित्थं पिलाटौ तस्य पार्श्वयोः ।
कर्णमूले पीतलिका चूलिका पिप्पलीति च ॥ ७३ ॥
तस्यास्तु पर उद्घात आरक्षः कुंभयोरधः ।
उरःपार्श्वौ तु विक्षोभौ दर्दरौ गलपार्श्वयोः ॥ ७४ ॥
करटोऽस्य कटो गण्डो गात्रं पूर्वोऽघ्रिरस्य तु ।
मूलेधोऽध(ः प्रदेशास्तु) क्षयश्च पलिपादकः ॥ ७५ ॥
कूर्मस्सन्दानभागश्च प्रोह उत्संग इत्यपि ।
विशेषभागो जघनभागो वैशाख्यपि क्रमात् ॥ ७६ ॥
गात्रे सप्त नखादूर्ध्वं पिण्डिकान्तमवस्थिताः ।
पुच्छवंशोऽपवंशस्स्यान्निष्कोशः कुक्षिमध्यकम् ॥ ७७ ॥
अवरं पश्चिमः पादस्तत्राधोऽधस्स्थिताः क्रमात् ।
कालभागो बहिष्पार्श्वस्तथा जघनपिण्डिका ॥ ७८ ॥
मण्डुकी शकुटा पार्ष्णिस्तलप्रोहश्च सक्थि च ।
सन्दानभागः कूर्मश्च प्रदेशास्स्युर्नखावधेः ॥ ७९ ॥
अत्यूहः ककुदं मेढ्रे क्षीरिका चूचुकांतरम् ।
अथ पुच्छे स्थिताः किच्छी संवालो बालपुष्कलम् ॥ ८० ॥
वालपाशक इत्येवमधोऽधस्स्युर्यथोत्तरम् ।
दन्तभागः पुरोभागः पुच्छभागस्तु पार्श्वतः ॥ ८१ ॥
मुखे पृषन्ति पद्मानि वमथुः करशीकरः ।
प्रवृत्तिर्मद आलानं स्तंभस्तोत्रं तु वेणुकम् ॥ ८२ ॥
अंदुको निगलो न स्त्री भिदुरं शृंखला त्रयी ।
कलापकः कण्ठबन्धस्त्रिपदी पादबन्धनम ॥ ८३ ॥



चूषा कक्ष्या वरत्रा स्यादंकुशोऽस्त्री सृणिर्न षण् ।
अपष्ठं त्वंकुशस्याग्रं सूना दण्डोऽर्पितांकुशः ॥ ८४ ॥
सूनापष्ठांतरं मन्या वक्रकीलो हुरुट्टकः ।
कीलस्तु पुष्यलश्शंकुर्हिञ्जीरो लोहशृंखलः ॥ ८५ ॥
पश्चाच्चरणशंकौ तु पड्बीशो घुटिकोऽपि च ।
कदलिः करिणां केतुः शृंगारो गजमण्डनः ॥ ८६ ॥
स्थासको नक्षत्रमाला कर्णशंखौ तु शंकिलौ ।
गजोपचारकुशलो वाहितो मलहारकः ॥ ८७ ॥
आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।
तत्प्रधाना महामात्रा आरोहा गजजीवनाः ॥ ८८ ॥
पादकर्म यतं तेषां यातमंकुशवारणम् ।
वीतन्तदुभयं यच्च निस्सारं हयकुंजरम् ॥ ८९ ॥
अश्वस्तुरंगस्तुरगो हयस्सप्तिस्तुरंगमः ।
शालिहोत्री व्रती कुण्डी प्रोथी वारुः प्रकीर्णकः ॥ ९० ॥
कुदरो घोटकस्तार्क्ष्यः क्रमणो ग्रहभोजनः ।
पाकलः परुलः पीतो माषाशी हि सविक्रमः ॥ ९१ ॥
श्रीवृक्षकी वक्षसि चेद्रोमावर्तो मुखेऽपि च ।
मल्लिकाक्षस्सितैर्नेत्रैः कृष्णैरिन्द्रायुधो हयः ॥ ९२ ॥
पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ।
पुच्छोरःखुरकोशास्यैस्सितैस्स्यादष्टमंगलः ॥ ९३ ॥
आजानेयाः कुलीनास्स्युः पारसीकादयश्च ते ।
पारसीकादिसंज्ञास्तु पारसीकादिदेशजाः ॥ ९४ ॥
ये तु कांबोजबाह्लीकवनायुजमुखा हयाः ।
ते निहीनकुलाः किंचित् (पश्चि)मोत्तरदेशजाः ॥ ९५ ॥

निहीनास्त्वब्जलारट्टशंभला दोषिणः परे ।
तत्र शृंगी शृंगपदे मांसबुद्बुदवान् हयः ॥ ९६ ॥
मुसल्यन्यप्रभैकांघ्रिः कराली तु जरूर्ददः ।
ऋषभः ककुदावर्तो यमो हीनाधिकांगकः ॥ ९७ ॥
इन्द्रवृद्धिस्तु निर्मुष्कः स्त्री सरी तु खुरे त्रिके ।
कृत्तिकापिञ्जरस्स स्याद्यः पृषत्पुंजपिंजरः ॥ ९८ ॥
अश्वानामागमे संज्ञा वर्णिता वर्णहेतवः ।
सिते द्वौ कर्ककोकाहौ खोंगाहश्श्वेतपिंगलः ॥ ९९ ॥
आनीलस्स्यान्नीलकोशः पुंगाहः कृष्णवर्णकः ।
शोणः कोकनदच्छायस्त्रियूहः कपिलो हयः ॥ १०० ॥
कियाहो लोहितः पीतरक्तस्तूद्रकलाहकः ।
उराहस्तु मनाक्पाण्डुः कृष्णं जंघाद्वयं यदि ॥ १०१ ॥
पाटलो वोरुखानस्स्याद्दर्दभाभस्सुरूहकः ।
हलाभश्चित्रलो रेखाप्यस्य कृष्णास्ति पृष्ठगा ॥ १०२ ॥
कलाहस्तु मनाक्पीतः कृष्णस्स्याद्यादि जानुनि ।
खेङ्गाहः कपिलच्छायः पाण्डुवालधिकेसरः ॥ १०३ ॥
पीतस्तु हरियाः पीतहरिते हरिहालकौ ।
पीयूषवर्णे सेराहः पंगुलस्सितकाचसः ॥ १०४ ॥
सर्व एवान्यसंज्ञास्स्युः कर्काद्याः पुण्ड्रके सति ।
कोकुराहः खुरुराहो हलुराह इति क्रमात् ॥ १०५ ॥
कर्काद्याः खुरुराहस्तु फाले रेखा च पृष्ठगा ।
सरुराहस्सेरुराहो द्वौ सेराहे सपुण्ड्रके ॥ १०६ ॥
अश्वपोतः किशोरस्स्याद्वाम्यश्वा वडबार्वती ।
लुठितोऽश्व उपावृत्तस्सुकरो दुर्विनीतकः ॥ १०७ ॥



अह्नाश्वगम्यमाश्वीनं त्रिष्वेतेऽश्वतरः पुनः ।
स्याद्वेसरो वेगसरो मूकरुण्डौ तु वेसरात् ॥ १०८ ॥
अश्वा सूतेऽश्वतर्यां तु मूकाज्जातः किसिट्टकः ।
निगालस्तु गलोद्देशे नासाग्रे प्रोथमस्त्रियाम् ॥ १०९ ॥
आवर्तो रोमजो देवमणिस्त्वेष निगालजः ।
कश्यमश्वस्य मध्यं स्यात् दन्तवेष्टस्तु नालिका ॥ ११० ॥
कालिका दन्तरेखा स्याद्दन्तच्छिद्रमुलूखली ।
कर्तनं धूलिलुठितं वर्तनं तूपवर्तनम् ॥ १११ ॥
लोठभूर्मुखरज्जुस्तु स्याद्दन्ताल्यवरक्षणी ।
दामांचनं पादपाशो नासारज्जुस्तु लालिका ॥ ११२ ॥
कवियोऽस्त्री खलीनोऽस्त्री पंचांगी कविका कवी ।
प्राक्पादरज्जुरातालो बका स्याद्विग्रहे द्वयोः ॥ ११३ ॥
पर्याणं स्यात् पल्ययनं वल्गावक्षेपणी कुशा ।
कशा काम्रा वक्रपट्टे तलिका तलसारकम् ॥ ११४ ॥
पादपुव्यां पादकुली प्रक्षरं प्रखरोऽस्त्रियाम् ।
युग्याशनप्रसेवे तु द्वौ बोकाणप्रोहकौ ॥ ११५ ॥
आयानं स्यादलंकारो ग्रीवाभूषा तु गण्डकः ।
लवणस्य प्रदानाय कृता लवणलायिका ॥ ११६ ॥
तैलस्य नालिका सूत्रसंग्रहोऽश्वस्य कर्षकः ।
केशकारक्षौरकारौ नलिवाहस्तु घासिकः ॥ ११७ ॥
अश्वानां तु गतिर्धारा विभिन्ना सा तु पंचधा ।
आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥ ११८ ॥
इत्येतेषाञ्च पंचानामेकैकं बहुभेदकम् ।
गत्यर्थास्तद्वदर्थाश्च सर्वे ते वाच्यलिंगकाः ॥ ११९ ॥

तत्रास्कंदितकं कोपादिव सर्वैः पदैर्मुहुः ।
उत्प्लुत्योत्प्लुत्य गमनमुपकण्ठापराभिधम् ॥ १२० ॥
अथ धौरितकं धौर्यं धौरितं धौरणं च तत् ।
तच्च कंकशिखिक्रोडनकुलानां गतैस्समम् ॥ १२१ ॥
रेचितं स्याद्भारवहं तच्चावक्रगतिर्द्रुता ।
वल्गितं वल्गनं पद्भिर्भेदाश्चाष्टौ यमादयः ॥ १२२ ॥
प्लुतं तु लंघनं पक्षिमृगधर्मेण भिद्यते ।
यानं सांयात्रिकं युग्यं वाहनं वाह्यधोरणे ॥ १२३ ॥
योग्यं चास्मिंश्चक्रयुते शतांगस्स्यन्दनो रथः ।
वहित्रं वहनं चास्मिंश्चतुरश्रे सकूबरे ॥ १२४ ॥
दीर्घाद्विपक्षवहनमनः क्ली शकटोऽस्त्रियाम् ।
प्रवाहिर्ना वृत्तमध्ये पक्षकूबरवर्जिते ॥ १२५ ॥
देवतार्थो देवरथो युद्धार्थस्सांपरायिकः ।
क्रीडार्थस्स्यात् पुष्यरथः कृतः कर्णीरथो मृदा ॥ १२६ ॥
कर्णीरथं प्रवहणं हयनं रथगर्भके ।
गन्त्री स्त्री कूबरं न स्त्री रथे कंबलिवाह्यके ॥ १२७ ॥
रथस्तु जयकृज्जैत्रो यात्रार्थः पारियाणिकः ।
रथेऽत्र द्वैपवैयाघ्रौ प्रावृते व्याघ्रचर्मणा ॥ १२८ ॥
वृते रथे पाण्डुभिस्स्यात्कंबलैः पाण्डुकंबली ।
एवं कांबलवास्त्राद्याः कंबलादिभिरावृते ॥ १२९ ॥
योग्यारथो वैनयिको जैत्रप्रभृतयस्त्रिषु ।
धूः स्त्री धुर्वी यानमुखं युगमीषान्तबन्धनम् ॥ १३० ॥
कस्तंभि युगमध्येऽस्त्री स्यादक्षश्चक्रधारणम् ।
अक्षकीले त्वाणिर्न क्ली ध्रुवः कीलोऽप्यनिर्न षण् ॥ १३१ ॥



रथनीडो रथस्यान्तं बन्धुरा तनुकूबरम् ।
रथगुप्तिर्वरूथो ना कूबरो ना युगन्धरः ॥ १३२ ॥
अनुकर्षो रथस्याधोधरणन्दार्वथानसः ।
युगो द्वितीयः प्रासंगः पताका तु ध्वजोऽस्त्रियाम् ॥ १३३ ॥
अस्योच्चूडावचूडौ द्वावूर्ध्वाधोमुखचूडकौ ।
अरि चक्रं रथपदं रथांगं केशवायुधम् ॥ १३४ ॥
स्त्री नेमिर्ना प्रधिश्चक्रप्रान्ते तुंबा तु नाभिका ।
अरास्तयोः स्थिता मध्ये रथांगानि त्वपस्कराः ॥ १३५ ॥
शिबिका याप्ययानं स्याद्दोला हेलार्थरूपणम् ।
प्रेंखोलनं तु प्रेंखोलं प्रेंखो रिङ्खोलनाद्यपि ॥ १३६ ॥
आन्दोलनं स्यादान्दोलो दोला स्याद्दोलिकापि च ।
परंपरावाहनं यत्तद्वैनीतकमस्त्रियाम् ॥ १३७ ॥
नियन्ता प्राजिता क्षत्ता यन्ता सूतश्च सारथिः ।
सव्येष्ठो दक्षिणेस्थश्च स्यन्दने पार्ष्णिसारथिः ॥ १३८ ॥
सेवका युधि योद्धॄणां भटा यौधाश्च यौधकाः ।
पदातिपत्तिपादातपदातिकपदाजयः ॥ १३९ ॥
पातिकः पादिकः पद्गो रथिको रथिनो रथी ।
सेनास्थास्सैनिकास्सैन्यास्सेनारक्षास्तु सैनिकाः ॥ १४० ॥
पार्ष्णिग्राहास्तु पृष्ठस्थास्साहस्रास्तु सहस्रिणः ।
परिधिस्थाः परिचरास्सेनानीर्वाहिनीपतिः ॥ १४१ ॥
दंशिते स्युः कवचितसज्जसन्नद्धवर्मिताः ।
आबद्धः पुनरामुक्तः प्रतिमुक्तः पिनद्धवत् ॥ १४२ ॥
काण्डपृष्ठस्त्वायुधिक आयुधीयोऽस्त्रजीवनः ।
धन्वी धनुष्मान् धानुष्को निषंग्यस्त्री धनुर्धरः ॥ १४३ ॥

चर्मी शाक्तीकयाष्टीकपारश्वधिककौन्तिकाः ।
काण्डीरखाङ्गिकाद्याश्च चर्मशक्त्यादिधारिणः ॥ १४४ ॥
छायाकरश्छत्रधरः पताकी वैजयन्तिकः ।
पुरस्सरः पुरोगोऽग्रेसरः प्रष्ठोऽग्रतस्सरः ॥ १४५ ॥
पुरोगमः पुरोगामी यस्त्वलं यात्यरीन् प्रति ।
सोऽभ्यमित्र्योऽभ्यमित्रीणोऽप्यभ्यमित्रीय इत्यपि ॥ १४६ ॥
शूरो वीरश्च विक्रान्तः पटुश्चारभटोऽपि च ।
अशूरो हतकः क्लीबो जिष्णौ तु जयिजित्वरौ ॥ १४७ ॥
शक्ये तु जेतुं जय्यस्स्याज्जेयो जेतव्यमात्रके ।
जैत्रो जेता जितो भग्नः कृतहस्तस्तु शिक्षितः ॥ १४८ ॥
लघुहस्तस्सुहस्तश्च कृतास्त्रः कृतपुंखकः ।
सांयुगीनो रणे साधुरत्यंतीनो भृशंगते ॥ १४९ ॥
कामंगाम्यनुकामीनो जवी तु जवनो जवः ।
जंघालोऽतिजवे धीरमन्थरौ मन्दगामिनि ॥ १५० ॥
स्यादुरस्वानुरसिल ऊर्जस्व्यूर्जस्वलोर्जितौ ।
बली प्रबल ओजस्वी वाच्यवद्ग्रथिकादयः ॥ १५१ ॥
संशप्तकास्तु संग्रामात् समयेनानिवर्तिनः ।
त्वक्त्रन्तु दंशनं वर्म तनुत्रं कवचोऽस्त्रियाम् ॥ १५२ ॥
माठिः स्त्री जागरो वक्षश्छदस्सन्नाहकंकटौ ।
तत्सूत्रकं सूत्रमयं जालिका स्यादयोमयी ॥ १५३ ॥
नागोदर्युदरत्राणं जंघात्राणं तु मत्कुणम् ।
पट्टस्तु लिपिसन्नाहः प्रकोष्ठादौ कृतो यथा ॥ १५४ ॥
बाहुलं बाहुरक्षा च मर्दनी पादरक्षणी ।
गोधा तला च न नरौ हस्तघ्नो ज्यानिवारणे ॥ १५५ ॥



अंगुलित्रे कपी शीर्षत्राणे शीर्षण्यशीर्षके ।
अधिकांगं सारसनं मध्ये धार्यं सकंकटैः ॥ १५६ ॥
सर्वाभिसारस्सर्वौघस्सर्वसन्नहनार्थकः ।
न क्ली हेतिश्शस्त्रमस्त्रमायुच्छत्रुघ्नमायुधम् ॥ १५७ ॥
ऋष्टिः खड्गः प्रचारोऽसिर्धर्मपालः प्रजागरः ।
धर्मो विशसनो देवो मनुष्येष्टश्शिवंकरः ॥ १५८ ॥
श्रीगर्भो विजयश्शास्ता कृपाणासंगरिष्टयः ।
कौक्षेयको भद्रसुतो ह्रस्वनिर्वंशकस्त्वसिः ॥ १५९ ॥
स्नुहीदलाभो निस्त्रिंशो मण्डलाग्रोऽन्वितार्थकः ।
चन्द्रहासोऽर्धचन्द्राग्र इली तु करवालिका ॥ १६० ॥
जंबूगर्तस्तु खड्गांबु न्यस्ततैलरुचिर्यदि ।
वराभोऽनिल एरण्डबीजाभपुलकावलिः ॥ १६१ ॥
हुष्टुतः पुलकैरण्डस्सितदीर्घानवस्थितैः ।
हरकस्तरवारिः स्त्री यष्टिश्चापि मृदौ पृथौ ॥ १६२ ॥
कुण्डलो दीर्घनिर्वंशो पुलकास्त्वणुराजयः ।
अथासिपुत्री क्षुरिका शस्त्रिका चासिधेनुका ॥ १६३ ॥
सातिदीर्घा पत्रफला कुट्टन्ती हुलमात्रिका ।
पट्टसो लोहदण्डो यस्तीक्ष्णधारः खुरोपमः ॥ १६४ ॥
कण्टकच्छेदनोऽप्येवं द्विमुखश्च भवत्यसौ ।
प्रासः कुन्तो हाटकस्तु स त्रिकण्टकसंस्थितः ॥ १६५ ॥
भिण्डिपालः क्षेपणीयस्सृगो दीर्घे महाफले ।
तोमरोऽस्त्री लोहहुलदण्डे कासूश्च सर्वला ॥ १६६ ॥
कणयो लोहमात्रोऽथ शंकुर्ना शल्यमस्त्रियाम् ।
वराहकर्णकोऽन्वर्थः क्षुरिकाद्या हुलाग्रकाः ॥ १६७ ॥

हुलं द्विफलपत्राग्रं मुनयोऽस्यस्य शेखरम् ।
प्रत्याकारपरीवारौ कोशो मुष्टौ त्सरुः पुमान् ॥ १६८ ॥
शतघ्नी तु चतुस्ताला लोहकण्टकसंचिता ।
अयःकण्टकसंच्छन्ना शतघ्न्येव महाशिला ॥ १६९ ॥
भुसुण्ठी स्याद्दारुमयी वृत्तायःकीलसंचिता ।
हस्तिचारो गजत्रासहेतुश्शरभसन्निभः ॥ १७० ॥
देवदण्डोऽरत्निमात्रो दीर्घो मुसलयष्टिकः ।
द्रुघणे मुद्गरघनौ परिघः परिघातनः ॥ १७१ ॥
अस्त्रियौ चापधनुषावासेष्वासौ धनुर्द्रुणम् ।
कार्मुकं धन्व कोदण्डमायुधाग्र्यं शरासनम् ॥ १७२ ॥
कार्मुकं तु चतुर्हस्तं कोदण्डं त्र्यंगुलं विना ।
कार्मुकात्तु क्रमात् पंच विद्धायुधशरायुधे ॥ १७३ ॥
गोतमं रथायुधकं कोसलं गाण्डिवोऽस्त्रियाम् ।
पातनं मार्गणं चेति द्विगुणानि यथोत्तरम् ॥ १७४ ॥
उच्चलं ब्रह्मदण्डश्च वैशिखं बिंबसारकम् ।
द्विगुणानि क्रमादाद्यं त्वष्टोत्तरशतांगुलम् ॥ १७५ ॥
केतनं पंचविंशत्या पलैर्द्वे द्विगुणे परे ।
करीरपृष्ठं व्यासं च सहितं तु शतैस्त्रिभिः ॥ १७६ ॥
पलानां पंचभिस्त्वेषां शतैस्स्यात्सहितोत्तरम् ।
लस्तको धनुषो मध्यमग्रं लुस्तमटन्यपि ॥ १७७ ॥
अर्तिरार्तिः किरिः कोटी ज्या जीवा मौर्विका द्रुणा ।
तूणी तूण उपासंगतूणीरौ विशिखाश्रयः ॥ १७८ ॥
निषंग इषुधिर्न क्ली पत्री तु विशिखः खगः ।
पृषत्को रोपणो बाणः कलंबो मर्मभेदनः ॥ १७९ ॥



चित्रपुंखो वीरशंकुश्शरो रोध इषुर्न षण् ।
प्रक्ष्वेलनस्तु नाराच एषणश्चायसे शरे ॥ १८० ॥
अर्धशल्योऽर्धनाराचः कंकपत्रश्शिलीमुखः ।
त्रिभागशल्यनाराचे द्वौ दण्डासनदण्डिकौ ॥ १८१ ॥
अर्धचन्द्रः क्षुरप्रस्स्याद्विकर्णिः कर्णिकारलः ।
स्नुहीदलफलो भल्लश्चिपाटोऽल्पस्तदाकृतिः ॥ १८२ ॥
पाददण्डोऽन्वितार्थस्स्यात् बाणस्तु गतपत्रणः ।
तीरी त्वल्पा वेगवती त्वग्बलाश्शरजालकाः ॥ १८३ ॥
अयश्शलाका कूटोऽस्त्री पत्रकूटस्सपत्रणः ।
द्विद्वाविंशत्यंगुलिस्स्यान्निचोटे द्व्यंगुलोत्तरः ॥ १८४ ॥
स्युश्चोटलिंगकस्तालः कुलिको बिंबसारकः ।
कर्तरी पुंख आराग्रं त्वग्रं वाजश्छदावलिः ॥ १८५ ॥
पत्रणा पक्षरचना धारा शस्त्रमुखं फलम् ।
स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् ॥ १८६ ॥
त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृती ।
अन्वर्थं स्यात्समपदमालीढं तु ततोऽग्रतः ॥ १८७ ॥
दक्षिणे वाममाकुंच्य प्रत्यालीढं विपर्यये ।
वैहायसं च वेधे तु योगावाप उपक्रमः ॥ १८८ ॥
हस्तावापश्शरादानं प्रमाथो लस्तकग्रहः ।
मुष्ट्यायोजनमादानमिषोर्ज्यायां समूहनम् ॥ १८९ ॥
वितानं संहितस्येषोः किंचिदेव विकर्षणम् ।
निमित्तग्रहणं लक्ष्यग्रहो बुद्धिदृगादिना ॥ १९० ॥
आकर्णकर्षणं पूर्णमायामं त्वंगुलाधिकम् ।
ततोऽप्यर्धांगुलाकृष्टसंधानं तेजनं न ना ॥ १९१ ॥

मुष्टिमान्द्यं निर्हरणं व्यवच्छेदस्तु मोक्षणम् ।
कैराती गतिरूर्ध्वाधःप्रकर्षस्तु गतेर्लयः ॥ १९२ ॥
दृढदुष्करचित्राणि कर्माणि हरणानि च ।
मुचुटी सिंहकर्णी च पताका चेति मुष्टयः ॥ १९३ ॥
लक्षं तु लक्षणं लक्ष्यमभिसन्धानमासिकम् ।
वेध्यं शरव्यं न नरि श्रमस्थानं खलूरिका ॥ १९४ ॥
योग्याभ्यासः परिचयो बाणाभ्यास उपासनम् ।
शक्त्याद्यस्त्रं पाणिमुक्तं यन्त्रमुक्तं शरादिकम् ॥ १९५ ॥
मुक्तामुक्तं धृतं मुक्तं नागपाशादिदीर्घकम् ।
अमुक्तं छुरिकादि स्यादिति शस्त्रं चतुर्विधम् ॥ १९६ ॥
धौते निशातन्निशितं क्ष्णुतं तेजितमर्थवत् ।
फलं चर्ममयं चर्म फलकं खेटकं समम् ॥ १९७ ॥
अन्तर्लोहेन बद्धान्ते फलान्ते स्याद्धलाहका ।
हस्तिकर्णः परोवण्टः फली फलकिकाल्पिका ॥ १९८ ॥
कावाटो लघुकाष्ठस्स्यात्सयष्टिर्यष्टिवारणः ।
कटिका सूत्रसंस्यूता शलाकाः परिमण्डलाः ॥ १९९ ॥
अड्डनं सैव वेत्राद्यैस्संग्राहो मुष्टिरेषु या ।
लोहाभिहार उद्योगे राज्ञां नीराजनाविधिः ॥ २०० ॥
यत्सेनयाभिनिर्याणं पत्युस्तदभिषेणनम् ।
आसारस्तु प्रसरणी प्रचक्रं चलितार्थकम् ॥ २०१ ॥
विरतं तु भटोद्योगोऽभिक्रमो यानमभ्यरीन् ।
वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे ॥ २०२ ॥
नासीरोऽस्त्रचग्रयानं स्यादवस्कन्दस्तु सौप्तिकः ।
मृधमास्कन्दनं युद्धं समिकं सांपरायिकम् ॥ २०३ ॥



आयोधनं रणं संख्यं प्रथनं प्रविदारणम् ।
संप्रहारसमाघातकलिसंस्फोटसंयुगाः ॥ २०४ ॥
अभिमर्दाभिसंपातप्रघाताभ्यागमाहवाः ।
समुदायस्समुदयस्सम्मर्दस्संगरस्स्पशः ॥ २०५ ॥
संग्रामस्समरोऽस्त्री स्त्री संयदायुच्च युत् समित् ।
वीराशंसनमाजेर्भूर्घोरो लोलो महारणम् ॥ २०६ ॥
नियुद्धं बाहुयुद्धं स्यादवमर्दस्तु पीडनम् ।
अभ्यवस्कन्दनं त्वभ्यासादनं स्खलितं चलम् ॥ २०७ ॥
अविषादो धृतिर्धैर्यमवष्टंभस्तु सौष्ठवम् ।
वीराणां यद्रणे नृत्तं तस्मिन्वीरजयन्तिका ॥ २०८ ॥
प्रसभोऽस्त्री बलात्कारो हठश्च विजयो जयः ।
प्रतीकारो वैरशुद्धिरपदानं पराक्रमः ॥ २०९ ॥
शौर्यं वीर्यमथ स्थाम बलं शुष्म तरस्सहः ।
नाशस्त्वपक्रमोऽपायो विप्रयाणं पलायनम् ॥ २१० ॥
सन्द्रवोद्द्रावसन्द्रावप्रद्रावद्रवाविद्रवाः ।
विशस्तु घात उन्मन्थो विशरं प्रमथो वधः ॥ २११ ॥
निर्वासनं निहननं निबर्हणनिषूदने ।
निस्तर्हणं निशरणं निकारणनिशुम्भने ॥ २१२ ॥
निर्वापणं निरसनं निर्गन्थननिहिंसने ।
प्रमापणं प्रमथनं प्रवासनमपासनम् ॥ २१३ ॥
परासनं विशसनं मारणं प्रतिघातनम् ।
उद्वासनं प्रशसनं क्षणनं परिवर्जनम् ॥ २१४ ॥
उज्जासनं संज्ञपनं क्राथनं प्रविसारणम् ।
व्यापादनश्च हिंसा च कदनं संकुलो वधः ॥ २१५ ॥

रुण्डोऽशिराः कबन्धोऽस्त्री कुणपस्तु शवोऽस्त्रियाम् ।
शवयानं कटः खाटिश्चिता चित्या चितिः स्त्रियाम् ॥ २१६ ॥
अरुः क्षतं ना क्षणितुर्व्रणोऽपीर्मोऽपि न स्त्रियौ ।
किणो रूढं व्रणस्थाने तुमुलं रणसंकुलम् ॥ २१७ ॥
जितकाशी जितरणः कान्दिशीको भयद्रुतः ।
अपराद्धशरोऽसौ स्याद्यस्य लक्षाच्च्युतश्शरः ॥ २१८ ॥
पराजितः पराभूतः प्रणष्टस्त्वगृहीतदिक् ।
प्रस्कन्नपतितौ ध्वस्ते मूढे मूर्च्छालमूर्छितौ ॥ २१९ ॥
परासुरुपसंपन्नः प्रमीतस्संस्थितो मृतः ।
जीवो जीवदिनादूर्ध्वं त्रिषु जीवस्तु जीवितम् ॥ २२० ॥
आयुर्जीवितकाले क्ली जीवातुर्जीवितागदः ॥ २२०″॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
भूमिकाण्डे क्षत्रियाध्यायः)

---



### वैश्याध्यायः

अर्या भूमिस्पृशो वैश्या ऊरव्या ऊरुजा विशः ।
आजीवो जीविका वृत्तिर्वार्ता वर्तनजीवने ॥ १ ॥
मृतं क्ली याचितं भैक्षममृतं स्यादयाचितम् ।
उंछो धान्यश आदानं कणिशाद्यार्जनं सिलम् ॥ २ ॥
ऋतं तदुभयं स्त्री तु कृषिः क्ली प्रमृतानृते ।
सत्यानृतं तु वाणिज्यं वणिज्या वणिजा स्त्रियौ ॥ ३ ॥
पाशुपाल्यं जीववृत्तिस्स्यादृणं पर्युदंचनम् ।
तदवृद्धिकमुद्धारः कुसीदं तु सवृद्धिकम् ॥ ४ ॥
वार्धुष्यं वार्धुषं धान्यवृद्धिर्वृद्धिः पुनः कला ।
सा कायिकान्वहं देया प्रतिमासं तु कालिका ॥ ५ ॥
कारिका तु स्वयं दृष्टा चक्रवृत्तिस्तु वृद्धिजा ।
परिवर्तेन निर्वृत्तं वस्तु स्यादापमित्यकम् ॥ ६ ॥
सेवा श्ववृत्तिरेताश्च याजनाद्याश्च वृत्तयः ।
त्रिष्वालेखात्कुडुंबी तु क्षेत्राजीवः कृषीवलः ॥ ७ ॥
कर्षकोऽथ द्वैगुणिको वृद्ध्याजीवः कुसीदिकः ।
वार्धुषी स्याद्वार्धुषिके प्रयोक्तर्युत्तमर्णकः ॥ ८ ॥
ग्रहीतर्यधमर्णस्स्यादाप्तः प्रत्ययितस्समौ ।
मध्यस्थः प्राश्निकस्साक्षी मूली स्यादुष्टसाक्षिणि ॥ ९ ॥
कूटसाक्षी मृषासाक्षी प्रतिभूर्लग्नकोऽतरः ।
अभियोक्ता शिरोवर्ती शिरस्थोऽथाभियुक्तके ॥ १० ॥
संदंशितोऽभिशस्तश्च वसुराक्षारिकोऽपि च ।
सदेवासत्कृतं सभ्यैस्तिरितं साक्षिणा तु चेत् ॥ ११ ॥

अनुशिष्टमथो लेखो लेख्यं दिव्यन्तु दैविकम् ।
न्यासस्तूपनिधिस्स्थाप्यनिक्षेपा न्यस्तकोऽस्त्रियाम् ॥ १२ ॥
सदस्या देशिकास्स्थेयास्सभास्तारास्सभासदः ।
सभ्यास्सामाजिकाश्चाथ गोष्ठ्यास्था परिषत् सभा ॥ १३ ॥
समज्या तारणी संसद्घटा स्थानं सदोऽप्यना ।
द्रष्टरि व्यवहाराणां प्राड्विवाकोऽक्षदर्शकः ॥ १४ ॥
न्यायोऽक्षो व्यवहारोऽथ संप्रश्नस्संप्रधारणम् ।
समर्थनं च संस्था तु मर्यादा धारणा स्थितिः ॥ १५ ॥
अर्थिनो वचनं भाषा स्यात्प्रत्यर्थिन उत्तरम् ।
कारणन्त्वभ्यवस्कन्दः प्रत्यवस्कन्द इत्यपि ॥ १६ ॥
अवस्कन्दश्च भाषार्थमंगीकृत्य विशेषगीः ।
केदारः केदरः क्षेत्रमुर्वरा सर्वसस्यभूः ॥ १७ ॥
भूमिश्छिद्रं कृष्ययोग्या प्रहतं नालमुत्थितम् ।
खिलं त्वप्रहतं स्थानमूषवत्यूषरेरिणौ ॥ १८ ॥
मौद्गीनकौद्रवीणाद्याः क्षेत्रे मुद्गादिसंभवे ।
यव्यव्रैहेयशालेयषष्टिक्यास्सयवक्यकाः ॥ १९ ॥
यवादेस्तिल्यतैलीनौ तिलस्योमाणुभंगतः ।
माषाच्चैवं द्विरूपत्वं शाकाच्छाकिनशाकटौ ॥ २० ॥
एवं वास्तुकवार्ताकबालकाशेक्षुमूलकात् ।
द्रोणाढकादिवापेषु द्रौणिकाढकिकादयः ॥ २१ ॥
खारीवापे तु खारीकं हल्यं सीत्यं च कृष्टके ।
तृतीयाकृतं त्रिसीत्यं त्रिहल्यं त्रिगुणाकृतम् ॥ २२ ॥
त्रिष्कृष्ट एवं द्विष्कृष्टे शंबाकृतमिहाधिकम् ।
बीजाकृतं तूप्तकृष्टं प्रहतप्रमुखास्त्रिषु ॥ २३ ॥



लोष्टोऽस्त्री दरिणिर्न स्त्री लेष्टुर्ना मृत्तु मृत्तिका ।
पुरीषं मृत्तिकाचूर्णं मृत्सा मृत्स्ना प्रशस्तमृत् ॥ २४ ॥
झरुका त्विष्टकाया विडूषस्तु क्षारमृत्तिका ।
धूलिस्स्त्रियां रजः पांसू रेणुः पुंस्यथ कर्दमे ॥ २५ ॥
दारिपत्परिपत्पंकचिकिलाश्च निषद्वरः ।
शादावकीलजंबाला वप्रोऽस्त्री पालिराल्यपि ॥ २६ ॥
क्षेत्रमध्ये कृता साल्पा स्थाला स्यादथ लांगलम् ।
हलं गोदारणं सीरमीषा सीरादिदण्डकः ॥ २७ ॥
निरीषः कृषकः फालश्शम्या तु युगकीलकम् ।
योक्त्रं तु योत्रमाबन्धः खनित्रमवदारणम् ॥ २८ ॥
गोदारणं तु कुन्दालमभ्रिः स्त्री क्षूस्तु तन्मुखे ।
प्रतोदः प्राजनं तोत्रं कोटिशो लोष्टभञ्जनः ॥ २९ ॥
दात्रं लवित्रमसिदो योऽस्य मुष्टिस्स वण्टकः ।
स्यात्समीकरणं मत्यं सीता लांगलपद्धतिः ॥ ३० ॥
न स्त्री मेथिः खले पाली खलधानं पुनः खलः ।
व्रीहिर्विरेणुको वीज्यो धान्यं सस्यं लवेटिका ॥ ३१ ॥
व्रीहयस्स्तंबकरयश्शालयश्श्वेततण्डुलाः ।
सुगन्धिको महाशाली रक्तशालिस्सलोहितः ॥ ३२ ॥
सांवत्सरः कृष्णशालिर्बालकश्चावरोहकः ।
श्वेतशालोऽपौरशूरचपलाः करसूकरौ ॥ ३३ ॥
षष्टिको गर्भपाकी स्यात्प्रवरश्शालियष्टिकः ।
कलापकास्तु कलमा हायनास्तु महाबुसाः ॥ ३४ ॥
माषस्तु मलदो नन्दी घरी बीजवरो बली ।
वृष्यो महावृषो गुच्छा कुलिंगाटी फलांकुरा ॥ ३५ ॥

मुद्गस्तु प्रथनो लोभ्यो बलांगो हरितो हरिः ।
पीतेऽस्मिन्वसुखण्डीरप्रवेलजयशारदाः ॥ ३६ ॥
सुराष्ट्रचीनचक्षुष्या हरिमन्थार्धरूपकौ ।
कृष्णे प्रवरवासन्तौ हरिमन्थजशिबिकौ ॥ ३७ ॥
वनमुद्गे तु वरकनिगूढककुलीमकाः ।
खण्डी च राजमुद्गे तु मरिष्टकमयष्टकौ ॥ ३८ ॥
जर्तिलोऽरण्यजतिलो जालकश्चूलिकस्तिलः ।
कृष्णेऽस्मिंस्तिलके (षण्डे) पिञ्जपेजौ तिलात् परौ ॥ ३९ ॥
तिलपुष्पं वज्रपुष्पं मसुरस्तु मसूरकः ।
मंगल्यं पृथुसूप्यश्च व्रीहिकंको मसूरिका ॥ ४० ॥
कदंबकस्तु शुभकस्सर्षपोऽस्मिन् पुनस्सिते ।
त्रिष्टुभभ्रात्ररक्षोघ्नाश्शठस्सिद्धार्थतोटकौ ॥ ४१ ॥
पक्तिका त्रिष्टुभा चास्मिन् गौरेऽथो राजसर्षपे ।
क्षुधा क्षुधाभिजननस्त्वाष्ट्रको राजिकासुरी ॥ ४२ ॥
वंशवर्णो कृष्णवर्णस्संवर्तो वातुलश्चणः ।
कलायस्स्यात् कालपूरः खण्डिकः कालपूरकः ॥ ४३ ॥
पूरकोऽप्योलहा जाड्यः वर्तुलेऽत्र सतीनकः ।
खुडारे त्रिपुटः खेलौ रंकुटी तु हरेणुकः ॥ ४४ ॥
स्नेहपूरे तु फलकः कर्षायौ पाकचूडकौ ।
सुवर्चलामसृण्यौ च क्षुमा चोमाप्यतस्यपि ॥ ४५ ॥
खल्वे तु पवनिष्पावौ शिंबिकास्य प्रियैलिका ।
अलसान्द्रे राजमाषो निष्पावश्श्वेतशिंबिका ॥ ४६ ॥
काकाण्डस्स्याच्चोदनिका कृष्णशिंबिर्विचक्षणा ।
कृष्णवृन्ते खलकुलं ताम्रवृन्तः कुलस्थकः ॥ ४७ ॥



प्रचूडकः कफहरी प्रवृत्तिश्च कुलुत्थिका ।
आढकी तुवरी वह्ला सौराष्ट्री करवीरिका ॥ ४८ ॥
पतंगना च पृथ्वी सा वर्णा स्यात् पाटलिंगिका ।
छत्रा कुस्तुंबरी धान्या धन्या धाना धनीयिका ॥ ४९ ॥
कुमारी मुसली वंश्या गडूची कटुकैषणा ।
सुचरित्रा च धन्याकधन्येयकतकानि च ॥ ५० ॥
कुस्तुंबुरु च धान्यं च भृंगा स्यान्मातुलानिका ।
यवे रूढो दीर्घशूकश्शितशूको महाबुसः ॥ ५१ ॥
आरूढश्च पवित्रश्च याज्ञिकोऽश्वप्रियोऽपि च ।
महायवे प्ररूढोऽल्पे वनाशोऽतियवोऽपि च ॥ ५२ ॥
यावके बलकुल्माषौ यवके तोयपर्णिका ।
गोधूमस्तु म्लेच्छभोज्यस्सुमनः श्लेष्मलो गुरुः ॥ ५३ ॥
शतपर्वा बहुवक्रः कोद्रवे कोरदूषकः ।
वालनाटकवाव्यालौ वरकः कूरदूषकः ॥ ५४ ॥
विरूक्षकोद्रवोन्नालमदना वनकोद्रवे ।
चिक्काणकंगुनी कंगुः प्रियंगुः पीततण्डुला ॥ ५५ ॥
शीतकंगुस्तु मुसुटी पीतकंगुस्तु मागवी ।
श्यामकंगुस्तु मधुका यावनालस्तु जोनलः ॥ ५६ ॥
जूर्णाह्वयो देवधान्यं जोन्नाला बीजपुष्पिका ।
नीवारस्तु वृषावाहः प्रतीचो मुनिसेवितः ॥ ५७ ॥
अव्यादा लोलिका सेव्या जलजा तृणधान्यकम् ।
श्यामाको नीलपुष्पस्स्यात्स्मयाकश्च मुनिप्रियः ॥ ५८ ॥
स्त्री काककंगुश्चीनस्स्यात्तृणकोलोऽप्युदारकः ।
गर्मुत्पुनगर्मुटिका चुलुंछस्तु गवीथुका ॥ ५९ ॥

ज्योतिष्मती सुलवणा गोजिह्वा भक्षिणी शिवा ।
गुन्द्रा कुत्रफला गुच्छा क्षेत्रिया बालनायिका ॥ ६० ॥
रूक्षणीया जंतुफला गवेधुश्च गवेधुका ।
गांगेरुकी नागवला झषा ह्रस्वगवेधुका ॥ ६१ ॥
गोरक्षतण्डुलश्चाथ शाको मर्कटकस्समौ ।
माषादयश्शमीधान्ये शूकधान्ये यवादयः ॥ ६२ ॥
कोद्रवाद्याः कुधान्यानि व्रीहयश्शालिकादयः ।
स्तंबे गुचक्षुपौ काण्डे नाली त्र्यफला तु सा ॥ ६३ ॥
पलालोऽस्त्री कर्णिका स्त्री पूलोऽस्त्री तृणपंचिका ।
कडंगरो बुसोऽथ स्यात्कणिशं धान्यमंजरी ॥ ६४ ॥
पीनकोशी शमी शिंबा तीक्ष्णाग्रे शूकमस्त्रियाम् ।
धान्यराशिस्तु वलजा वरण्डस्तृणसंचयः ॥ ६५ ॥
गृहार्थोऽसौ कपोलूः स्त्री विक्षिप्तः स्वस्तरो ह्यसौ ।
समौ प्रयामनीवाकौ क्रपुकात् प्राक् परे त्रिषु ॥ ६६ ॥
ऋद्धमावसितं धान्यं पूतं तु बहुलीकृतम् ।
खलपूस्स्याद्बहुकरश्छादिषेयं छदिस्तृणम् ॥ ६७ ॥
क्रायिकः क्रयिकः क्रेता विपूर्वाः क्रेयवस्तुदे ।
क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रकम् ॥ ६८ ॥
विक्रेयं पणितव्यं च पण्येऽथ क्रपुकः क्रयः ।
भेटकः प्रक्रयः क्रेणी विक्रयो विपणः पणः ॥ ६९ ॥
वस्नोऽर्घोऽवक्रयो मूल्यं बन्धः प्रणय आधिकः ।
नीवी परिपणे मूलं धनं लाभोऽधिकं फलम् ॥ ७० ॥
परिवर्तो विनिमयो वैमेयो निमयोऽपि च ।
सत्यंकारः पुनस्सत्याकृतिस्सत्यापनं च तत् ॥ ७१ ॥



पण्याजीवस्सार्थवाहो नैगमो वाणिजो वणिक् ।
वैदेहकः प्रापणिकः क्रयविक्रयिकोऽपि च ॥ ७२ ॥
विटपोऽर्थस्स्वापतेयं रिक्थं पृक्थं धनं वसु ।
वित्तं च द्रविणं द्युम्नं हेमरूप्यात्मकं तु तत् ॥ ७३ ॥
अकुप्यं कुप्यमन्यत्स्याद्रूप्यं तद्द्वयमाहतम् ।
कोशमस्त्री हिरण्यं च हेमरूप्यं कृताकृतम् ॥ ७४ ॥
ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ।
स्त्री शुण्ठिरूषणं विश्वभेषजं सिंहलं कटम् ॥ ७५ ॥
शृंगिवेरं महाकन्दं हंसच्छत्रं कलापकम् ।
पिप्पली मागधी शौण्डी वृषलं चोषणा बला ॥ ७६ ॥
श्यामोपकुल्या वैदेही ग्रन्थिनी तीक्ष्णतण्डुला ।
जालिनी तण्डुला तन्वी काल्यंबष्ठा मनोहरी ॥ ७७ ॥
कपिवल्लयां कोलवल्ली गण्डीरी हस्तिपिप्पली ।
काण्डी वसीरकाण्डीरौ गृहकाण्डशिरः पुमान् ॥ ७८ ॥
मरीचं तु विरावृत्तमुषणं धर्मपत्तनम् ।
(मरिचं) पलितं श्यामं वेल्लनं पेलवं कटु ॥ ७९ ॥
लोहाख्यं श्यामवल्ली च त्र्यूषणं (तूषणादिकम्) ।
कावेरं त्रिकटु व्योषमप्यं कोलं कटूत्कटम् ॥ ८० ॥
ग्रन्थिकानलचव्यैस्तु चतुष्पञ्चषडूषणम् ।
चव्यं तु चविकं कोला भार्गी पद्मा च विष्ठिका ॥ ८१ ॥
त्रिफला तु मदोदर्का भूतसारी फलत्रिका ।
बलकाली बलारोहा चित्रकस्त्वग्निसंज्ञकः ॥ ८२ ॥
पंचकोलं कणाशुण्ठीचव्यग्रन्थिकचित्रकाः ।
अजाजी तु जया दीप्यो जीरको जीरणस्सितः ॥ ८३ ॥

मागधश्चाथ सूक्ष्मोऽसौ कणजीरण ओसरः ।
अग्निमन्थो हृद्यगन्धस्सुगन्धिः कालिका कणा ॥ ८४ ॥
कृष्णे तु जीरके पृथ्वी पृथुः कालोपकुंचिका ।
सुषवी कारवी फारी पृथ्विका पृथुशालिका ॥ ८५ ॥
कटुः कटुंभराशोका रोहिणी कटुरोहिणी ।
कृष्णभेदी मत्स्यपित्ता चक्रांगी शकुलादनी ॥ ८६ ॥
निष्कुल्यां चन्द्रबालैला पृथ्वीका त्रिदिवात्र तु ।
सूक्ष्मायां त्रिपुटा कुन्तिखुटिस्तुत्थोपकुंचिका ॥ ८७ ॥
कोरांगी नन्दिनी शाला कलुषी संयतापि च ।
काश्मीरं पौष्करे मूले पद्मपत्रं च पुष्करम् ॥ ८८ ॥
अव्यथातिचरा पद्मा चारटी पद्मचारिणी ।
जन्या जतूका रजनी जतुकृच्चक्रवर्तिनी ॥ ८९ ॥
शृंगी विषा प्रतिविषातिविषोपविषारुणा ।
शिग्रुजं श्वेतमरिचं त्वक्क्षीरा वंशरोचना ॥ ९० ॥
पद्मोत्तरं वह्निशिखं महारजतमित्यपि ।
कुसुंभे पिप्पलीमूले ग्रन्थिकं चटिका शिरः ॥ ९१ ॥
बर्हिपुष्पे ग्रन्थिपर्णं स्थौणेयं कुकुरं शुकम् ।
शतपर्वं च मित्रश्च कमलश्च शिलं च तत् ॥ ९२ ॥
समृद्धिः प्राणदा सिद्धिर्लक्ष्मीस्सर्वजनप्रिया ।
ऋश्यप्रोक्ता श्रोत्रकांता श्रावणी हस्तिपादिका ॥ ९३ ॥
ऋषिस्सृष्टा वृषा वृष्या हृद्या योग्या युगाह्वया ।
अथ वृद्धिर्बोधनीया महाश्रावणिका बुधा ॥ ९४ ॥
हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ।
एलावालुकमैलेयं सुगन्धि हरिवालुकम् ॥ ९५ ॥



वालुकं चाथ शैलेयं वृद्धं गिरिशिलाह्वयम् ।
कालानुसार्यं पाषाणपुष्पं शितशिवं शिवम् ॥ ९६ ॥
क्रिमिघ्नस्तण्डुलो वेल्लममोघा चित्रतण्डुला ।
विडंगोऽस्त्री सुगन्धा तु सुरसा गन्धनाकुला ॥ ९७ ॥
नाकुली सुवहा रास्ना छत्राकी सर्वलोचना ।
गन्धिनी स्यात्तालपर्णी दैत्या गंधकुटी मुरम् ॥ ९८ ॥
कुष्ठं वाप्यं पारिभाव्यं रोगाख्यं पाकलोत्पले ।
व्यालायुधं व्याघ्रनखं करजं चक्रकारकम् ॥ ९९ ॥
सुषिरा विद्रुमलता कपोतांघ्रिर्नटी नली ।
जटिला लोमशी मांसी तपस्विन्यामिषी जटा ॥ १०० ॥
धमन्यंजनकेश्यौ तु हनुर्हट्टविलासिनी ।
अपि शुक्तिः खुरश्शंखो नखं कोलदलं समाः ॥ १०१ ॥
अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ।
कारवी च खराश्वोग्रा दीप्यका लोचमस्तकः ॥ १०२ ॥
मधुरं क्लीतकं यष्टिमधुका मधुयष्टिका ।
लवंगं देवकुसुमं श्रीसंज्ञं च वरालकम् ॥ १०३ ॥
त्वक्पत्रं तु त्वचं चोचं वरांगं भृंगमुत्कटम् ।
मृगनाभिर्मृगमदो नगः कस्तूरिकापि च ॥ १०४ ॥
घनसारस्तु कर्पूरस्सितांगो हिमवालुका ।
चन्द्रनामानि चाथ स्यात्तक्कोलं कोलकं परम् ॥ १०५ ॥
अपि कोशफलं फालं कार्पासकृतमालकौ ।
जातीकोशं कोशफलमथागरु नृपार्हकम् ॥ १०६ ॥
लोहाख्यं कृमिजं भृंगं जोंगकं जांगलं मतम् ।
वंशकं वंशिकं शीर्षं प्रकरं मृदुलं लघु ॥ १०७ ॥

वनमायः पुरमदः काकतुण्डो वनद्रुमः ।
कालागरु तु मंगल्या मल्लिकासमगन्धि चेत् ॥ १०८ ॥
श्रीवेष्टः पायसं श्र्याख्यं श्रीवासो रक्तशीर्षकः ।
वेष्टश्श्रीवत्सपिण्याको दधिश्च सरलद्रवे ॥ १०९ ॥
वृकधूपश्च तूणस्तु पिण्डकश्चपलश्चलः ।
कप्याख्यः कपिलस्सिह्लः कृत्रिमः क्षेत्रिको वरः ॥ ११० ॥
तुरुष्कः पावनश्चाथ सर्जनो लालनो रसः ।
बहुरूपो यक्षधूपोऽप्यरालोऽप्यथ कृत्रिमे ॥ १११ ॥
वृकधूपोऽगुलालस्तु महिषाक्षः पलंकषः ।
चन्दनोऽस्त्री मलयजो भद्रश्री रोहणद्रुमः ॥ ११२ ॥
श्रीखण्डो गन्धसारश्च ताम्रसारन्तु चन्दनम् ।
पीतचन्दनमर्केष्टं गोशीर्षं हरिचन्दनम् ॥ ११३ ॥
किरानजं बला हार्या पिंजनं तैलपर्णिकम् ।
तथा कुचन्दनं पीतदारु रक्ते तु चन्दने ॥ ११४ ॥
पत्रांगं रञ्जनं सेव्यं धूर्तमैरावतं लसम् ।
कुचन्दनं जघन्यं च रक्तं च तिलपर्ण्यपि ॥ ११५ ॥
कुंकुमं घुसृणं वर्ण्यं रक्तं लोहितचन्दनम् ।
करटं चितकावेरं गौरवं वासनीयकम् ॥ ११६ ॥
काश्मीरजं पुष्परजस्संकोचं पीतनं वरम् ।
घोरं चाग्निशिखश्चापि जपापुष्पं प्रियंगु च ॥ ११७ ॥
नागोद्भवं तु सिन्दूरं कुंकुमेन समप्रभम् ।
गवलं माहिषं शृंगं शशोर्णं शशलोमनि ॥ ११८ ॥
अब्धिजे लवणे खण्डं त्रिकूटं त्रिकुटं कुटम् ।
भोजनीयं कटकटमणु प्रवरवारिजे ॥ ११९ ॥



अक्षीबं बिसिरं सेव्यं सैन्धवं तु नदीभवम् ।
माणिमन्थं शितशिवं नादेयं वेधकं पटु ॥ १२० ॥
विशुन्थलवणं संगं सिन्धि सिन्धूद्भवं मुखम् ।
संभरी पुनरेतद्वद्रौमकं तु रुमाभवम् ॥ १२१ ॥
वस्नं चाथो भूलवणं कनिष्ठं पाक्यमुद्भिदम् ।
क्षुद्रकं पांसुलवणं कुप्यं पानीयसंभवम् ॥ १२२ ॥
ऊषमूषरजं क्षेत्र्यं पांसुजं यवनं पटु ।
शूलिका तु महाजाली वेष्टावारं महाविडम् ॥ १२३ ॥
विडं तु पाक्यं बहुलं कृत्रिमद्रावणासुराः ।
घटिकालवणं तूग्रं विडवद्धनकालकम् ॥ १२४ ॥
सौवर्चलं तु रुचकं दुर्गन्धं शूलनाशकम् ।
अक्षं तार्क्ष्यं रुचिष्यं च तिलकं त्वत्र कृष्णके ॥ १२५ ॥
सौवर्चलं द्रवस्तु स्याज्जारणं लोहितोऽस्त्रियाम् ।
दशेत्थं लवणानि स्युरथोपलवणास्त्रयः ॥ १२६ ॥
तत्र क्षारो यवक्षारो निपीती कासतुद्वरः ।
श्वेतक्षारस्तीक्ष्णरसो विपाकी च स तु द्विधा ॥ १२७ ॥
यवाग्रजो यावशूकस्तत्रान्त्यो बहुसारकः ।
रसाढ्यो रसको योगी पत्रकः पत्रसारकः ॥ १२८ ॥
वीज्योऽसुवर्चिका क्षारः कपोतस्सुखवर्चकः ।
स्तुघ्निका स्वर्जिका स्वर्जियोगवाही सुवर्चिका ॥ १२९ ॥
टंकणस्तु क्रामणको लोहसंश्लेषकः कटुः ।
रसयोनिः पावनको मालतीतीरसंभवः ॥ १३० ॥
परशुश्शस्त्रकष्टंकश्शस्त्रक्षारो महाबलः ।
सहस्रवेधि बाह्लीकं जतुकं हिंगु रामठम् ॥ १३१ ॥

पत्रेऽस्य करवी बाष्पी पृथ्विका कारवी पृथुः ।
तिन्तृणीके तु वृक्षाम्लं चुक्रं शुक्ती रुचिः स्त्रियाम् ॥ १३२ ॥
सहस्रवेधी चुक्रोऽम्लवेतसश्शतवेध्यपि ।
गुधः क्षारस्य विकृतौ मत्स्यण्डी खण्डशर्करा ॥ १३३ ॥
फाणितं क्षुद्रकं खण्डं न स्त्र्यथो शर्करा सिता ।
मधूलं तु मधुर्न स्त्री मधुकं तत्पुरातनम् ॥ १३४ ॥
भ्रामरं तु भ्रमरकं क्षौद्रं सारघमाक्षिके ।
अन्वर्थं पौत्तिकं दालं दद्रुजं रूक्षवालुकम् ॥ १३५ ॥
औद्दालकं तु शालाकं विषजिन्मधुराम्लकम् ।
छात्रं सर्वौघमत्यर्थस्वाद्विमा मधुजातयः ॥ १३६ ॥
मदनस्तु मधूच्छिष्टं स्नेहोऽस्त्री पिच्छिले रसे ।
स्नेहे तिलानां तैलं स्यादन्येषां नामपूर्वकम् ॥ १३७ ॥
घृतमाज्यं हविस्सर्पिः कौम्भं त्वाज्यं दशाब्दिकम् ।
हैयंगवीनं पीथं च नवनीतं च तक्रजम् ॥ १३८ ॥
दधि विप्रप्रियं हव्यं क्षीरजं श्रीघनं गुरु ।
स्थूलं श्वेतं च मंगल्यं कट्वारश्शण्डगोरसौ ॥ १३९ ॥
संजावने तूप्तमात्रे प्राङ्मन्दात् सर्जकं दधि ।
मन्दन्तु मण्डजातं तद्बालजातं तु बालकम् ॥ १४० ॥
अम्लजुण्डी तु गर्भात् प्राग्गर्भस्तु मुखबन्धनम् ।
वलीमुखं तु गाढास्यं तत्स्थं तु सशरं दधि ॥ १४१ ॥
छिन्नं दधि बुसं रूक्षं खलं सेव्यं च निश्शरे ।
बहुसूदनमप्यस्मिन्द्रप्सं स्यादघनं दधि ॥ १४२ ॥
पत्रलं चाथ पक्कं स्यात् संजातं पयसश्शृतात् ।
धुक्षिमं तूद्धृतस्नेहान्मथितात्तु प्रमाथितम् ॥ १४३ ॥



तक्रपिण्डश्चाथ मस्तु प्राग्राढं दधिमण्डके ।
आतंचनं संजावनं प्रतीवापश्च मूतकम् ॥ १४४ ॥
पयो दुग्धं च पीथं च स्तन्यं पुंसवनं सरम् ।
गव्यं ज्येष्ठं मधु क्षीरं योग्यं सोमरसोद्भवम् ॥ १४५ ॥
ऊधस्यं जीवनीयं च धारोष्णं त्वमृतं पयः ।
आसप्ताहात्तु पीयूषं ततो मोरटमोरके ॥ १४६ ॥
अविसोढाविमरीसे अविदूसमवेः पयः ।
संतानिनी क्षीरशरश्शरोग्रद्रवसंहतिः ॥ १४७ ॥
तिलाटः कूर्चिका चेति क्षीरस्य विकृती उभे ।
घोलं तूग्रं कालशेयं दण्डाहतरसायने ॥ १४८ ॥
मोरटं गोरसश्चाथ घोलः पादांबुसंयुते ।
तक्रं कट्वरमर्शोघ्नं श्वेतच्छाणश्च सारणम् ॥ १४९ ॥
निरंबु घोलं मथितमुदश्वित्तु जलार्धकम् ।

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
भूमिकाण्डे वैश्याध्यायः)

---

शूद्राध्यायः

शूद्रोऽन्त्यवर्णो वृषलो द्विजपोतो जघन्यजः ।
पज्जः पद्योऽप्येकजातिश्शूद्रास्संकरजा अपि ॥ १ ॥
दासे भृत्यः परिस्कन्दः परजातः परैधितः ।
नियोज्यचेटकप्रेष्यभुजिष्यपरिचारकाः ॥ २ ॥
लाडीककिंकरप्रेंखपालूकपरिकर्मिणः ।
संचारिते धीकरश्च गोप्यास्स्युर्दाससूनवः ॥ ३ ॥
बन्धके स्थित आयत्तो भक्तायैव स्थितः कृतः ।
स्वस्कन्दो भिन्नकुंभश्च भुजिष्यो दासमोचितः ॥ ४ ॥
भृतके भृतिभुक्कर्मकरो वैतनिकस्त्रिषु ।
भरण्यं भरणं भर्म वेतनं निष्क्रयो भृतिः ॥ ५ ॥
कर्मण्या तुलिका भृत्या भारवाहस्तु भारिकः ।
वार्त्ताहरो वैवधिको भारयष्टिर्विहंगिका ॥ ६ ॥
शिक्यं तल्लंबि काचश्च पाथेयं शंबलोऽस्त्रियाम् ।
कारवश्शिल्पिनस्सर्वे कुलिकास्ते कुलोत्तमाः ॥ ७ ॥
कला शिल्पं च कर्माथ तंतुवायः कुविन्दकः ।
वाणिर्व्यूतिश्च वानं स्याद्वेमा ना वानदण्डकः ॥ ८ ॥
तर्कुः कर्तनभाण्डे ना त्रसरस्सूत्रवेष्टनः ।
धराः कार्पासतूलास्स्युस्तूलमस्त्री पिचुः पुमान् ॥ ९ ॥
पिंजनं स्याद्विहननं धराणां प्रविसारणम् ।
कल्पनं कर्तनं तुल्ये त्रिवृतं तु त्रिवृत्त्रिषु ॥ १० ॥
आवर्तनं तु वलनं सूत्राणि नरि तन्तवः ।
सौचिकस्तुन्नवायस्स्यात्सूचिस्सूचा च सीवनी ॥ ११ ॥



सूचिसूत्रं पिप्पलकमोतं प्रोतमुभे त्रिषु ।
सीवनं सेवनं स्यूती रंगाजीवस्तु चित्रकृत् ॥ १२ ॥
लेखनी तूलिका कूर्ची पुस्तं लेप्यादिकर्मणि ।
या तु लेप्यमयी नारी सा स्यादंजलिकारिका ॥ १३ ॥
पांचालिका तु वस्त्रादिपुत्रिका सालभञ्जिका ।
पलगण्डो लेपकारः कल्पाणिस्समलेपनी ॥ १४ ॥
संवाहकोऽगमर्दी स्याच्छस्त्रमार्जोऽसिधावकः ।
मणिकारो वैघटिकश्शौल्बिकस्ताम्रकुट्टकः ॥ १५ ॥
नाडिन्धमस्स्वर्णकारः कलादो मौष्टिकस्समाः ।
कर्मारस्स्यादयस्कारो व्योकारो लोहकारकः ॥ १६ ॥
शांखिकस्स्यात्कांबविको भस्त्रा चर्मप्रसेविका ।
सन्दंशस्स्यात्कंकमुखः काणा मूका बुषा स्मृता ॥ १७ ॥
विध्यते येन मण्यादिराविधोऽसौ निधोऽपि च ।
आस्फोटनी वेधनिका भ्रमः कुन्दश्च यन्त्रकम् ॥ १८ ॥
नाराची स्यादेषणिका शाणस्तु निकषः कषः ।
रोषाणस्तु घृषिर्वृष्वो हेमादिनिकषाश्मनि ॥ १९ ॥
यत्र निक्षिप्य कूटेन हन्यते सा निधानका ।
प्रतिच्छाया प्रतिकृतिः प्रतिमा प्रतियातना ॥ २० ॥
प्रतिच्छन्दः प्रतिनिधिर्बेरं च प्रतिरूपकम् ।
प्रतिबिंबोपमाने च सादृश्ये सन्निभं निभम् ॥ २१ ॥
हरिणी हेमप्रतिमा सूर्मिः स्थूणान्यलोहजा ।
कूटोऽश्मकुट्टकोऽथ स्याट्टङ्कः पाषाणदारकः ॥ २२ ॥
कायस्थस्स्याल्लिपिकरः करणोऽक्षरजीवनः ।
लेखकोऽक्षरचुंचुश्च लिबिर्लेखाक्षरस्य या ॥ २३ ॥

लिपिस्त्वालेख्यलेखास्याद्रेखा तु स्यादकृत्रिमा ।
वर्णांतरस्य सर्पादौ लाजिर्लेखा तु कृत्रिमा ॥ २४ ॥
मेलामन्दो मषिघटी मेलांबु मलिनांबु च ।
मेला(माणिर्न षण् तस्या लेखन्या) कणिकोद्धृता ॥ २५ ॥
चण्डिलः क्षुरमर्दी स्यान्नापितोऽन्तावसाय्यपि ।
क्षुरोऽस्य वपनं शस्त्रं कर्त्रिका कर्त्तनी कृवी ॥ २६ ॥
कुंभकारः कुलालोऽस्य पचनं पाकमण्डलम् ।
धूसरश्चाक्रिकस्तैली पिण्याको ना खलिस्त्रियाम् ॥ २७ ॥
आभीरस्तु महाशूद्रो गोपो गोसंख्यगोदुहौ ।
गोपालो वल्लवश्चाथ वत्सीयस्त्रिषु तद्धिते ॥ २८ ॥
जाबालस्स्यादजाजीवः कोणोऽस्त्री लगुडो नरि ।
सन्दानं दामनी दामा न ना दाम पशोस्तु या ॥ २९ ॥
रज्जुस्सा बन्धनी तन्त्री त्वल्पा पाशस्तु कर्णिका ।
गुणो वराटो रज्जुस्स्त्री न ना शुल्बा वटी त्रयी ॥ ३० ॥
ग्रन्थिर्बन्धो व्रजो गोष्ठो गौष्ठीनं तु पुरा व्रजः ।
मन्थस्तु मन्था मन्थानो वैशाखः खजकोऽपि च ॥ ३१ ॥
कुठारो मन्थविष्कंभो मन्थपात्रं तु गर्गरी ।
घोष आभीरपल्ली स्यात्पक्कणोऽस्त्र्यंत्यजालयः ॥ ३२ ॥
मालाकारो माल्यजीवी मालिकः प्रातिहारिकः ।
ऊर्णा स्त्रावः कदल्यादेः करण्डी तु पुटी त्रयी ॥ ३३ ॥
तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट् ।
ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः ॥ ३४ ॥
स उद्घनो यत्र काष्ठे काष्ठं निक्षिप्य तक्ष्यते ।
व्रश्चनः पत्रपरशुः परशुस्तु परश्वधः ॥ ३५ ॥



स्वधितिर्ना कुठारोऽस्त्री वासी स्याद्दारुतक्षणी ।
क्रकचोऽस्त्री करपत्रं स्वधितिः कर्त्तनस्समौ ॥ ३६ ॥
जीवान्तको मांसिकश्च कौटिको मांसविक्रयी ।
सूनातटिर्वधस्थानं कृपाणीली च कर्तरी ॥ ३७ ॥
मृगयुर्लुब्धको व्याधो द्वौ वागुरिकजालिकौ ।
आच्छोटनं खेटनश्च मृगव्यं मृगयापि च ॥ ३८ ॥
आखेटश्च वराधिश्च वागुरा मृगबन्धिनी ।
श्वा विश्वकद्रुर्मृगयादक्षोऽलर्कस्तु योगितः ॥ ३९ ॥
दक्षिणेर्मा तु स मृगो यो लुब्धैर्दक्षिणे हतः ।
वैतंसिकश्शाकुनिक उन्माथः कूटयन्त्रकम् ॥ ४० ॥
शल्यमस्त्री शलाका स्याद्वितंसः पक्षिबन्धनम् ।
पक्षिणा येन गृह्यंते पक्षिणोऽन्ये स दीपकः ॥ ४१ ॥
कैवर्तो धीवरो दाशो नौजीवी जालिमार्गरौ ।
मत्स्यधानी कुवेणी स्याद्बलिशं मत्स्यवेधनम् ॥ ४२ ॥
जालमानाय उद्दालस्तून्नतो मुकुलाकृतिः ।
पादूकृच्चर्मकारस्स्यादारा चर्मप्रभेदिनी ॥ ४३ ॥
वर्ध्री नध्री वरत्रा च शौण्डिकस्त्वासुतीवलः ।
कल्यापालो ध्वजी चाथ मद्यं स्यात्कापिशायनम् ॥ ४४ ॥
शीधु कश्यमिरा कल्या शुण्डा देवी परिस्रुता ।
परिस्रुन्माधवी हाला प्रसन्ना मदिरा सुरा ॥ ४५ ॥
मदना मोहकलिका मदिष्ठा काचमालिका ।
कादंबरी वारुणी च मधूलैस्तु मधूलिका ॥ ४६ ॥
पक्वैस्त्विक्षुरसैरस्त्री शीधुः पंकरसश्शिवः ।
शीतपंको रूक्षणीयोऽप्यपक्वैरसिकासवौ ॥ ४७ ॥

मधुमद्ये तु माध्वीकं कामिकान्तं मदोत्कटम् ।
विक्रान्तं कपिशं हृद्यं मुखवासस्सुखोदयः ॥ ४८ ॥
मध्वासवोऽसितस्सेव्यश्शार्करो माधवोऽस्त्रियाम् ।
मैरेयमासवो धात्रीधातकीगुडवारिभिः ॥ ४९ ॥
काकोली पैष्टिकी श्वेताप्यापानं पानगोष्ठिका ।
नग्नहूर्नी मद्यबीजं किण्वमप्यथ मेदकः ॥ ५० ॥
जगलोऽथ सनिस्सारो मर्कसो मासरोऽपि च ।
आसुतिर्मद्यसन्धानमासवोऽभिषवोऽपि च ॥ ५१ ॥
कारोत्तरस्सुरामण्ड आसवोऽप्यथ भक्षणम् ।
उपदंशोऽपदंशश्च मधुवारा मधुक्रमाः ॥ ५२ ॥
शुण्डापानं मदस्थानं सपीतिस्सहपानकम् ।
सरकं चषकं चास्त्री गल्वर्तोऽप्यनुकर्षणम् ॥ ५३ ॥
पानगोष्ठीषु यन्नृत्तं तत्र स्यादुच्चतालकम् ।
प्लवचाण्डालचण्डालमातंगास्तु जनङ्गमे ॥ ५४ ॥
विष्टिर्ना कारितं कर्म हठाद्येऽपि च तत्कृतः ।
अथैकागारिकश्चोरः परिमोषी मलिम्लुचः ॥ ५५ ॥
प्रतिरोधी परास्कन्दी तस्करः प्रतिरोधकः ।
स्तेनो रात्रिचरो दस्युर्मोषकः पारिपन्थिकः ॥ ५६ ॥
पश्यतो यो हरत्यर्थं स चोरः पश्यतोहरः ।
पटच्चरः पटच्चोरो बन्दी स्त्री प्रग्रहो ग्रहः ॥ ५७ ॥
लोप्त्वं हतोऽर्थश्चौर्यं तु स्तेयं स्तैन्यं च चौरिका ।
धूर्तोऽक्षधूर्तः कितवो द्यूतकृत्कृष्णकोहलः ॥ ५८ ॥
चौरिकश्चाक्षजीवी च सभिका द्यूतकारकाः ।
द्यूनोऽस्त्रियामक्षवती तद्भेदाः पञ्चिकादयः ॥ ५९ ॥



समाधिश्च समंगश्च परिवी रंजनं च तत् ।
पणो ग्लहो देवनस्तु पाशकोऽक्षोऽथ शारयः ॥ ६० ॥
शारास्स्युः परिणायस्तु तेषां संचारणेऽभितः ।
अक्षपाता आयास्ते तु चतुस्त्रिद्व्येकयोगिनः ॥ ६१ ॥
कृतं त्रेता द्वापरं च कलिश्चेति यथाक्रमम् ।
जायाजीवस्तु शैलूषश्शैलाली भरतो नटः ॥ ६२ ॥
रंगाजीवोनृतुर्नप्रो नण्डो रंगावतार्यपि ।
सर्ववेशी कृशाश्वी च नर्तकस्त्वभ्रफुछकः ॥ ६३ ॥
यो यष्टिरज्जुखड्गेषु प्रनृत्याति स पूरकः ।
केलकः प्रवकश्चासौ चारणास्तु कुशीलवाः ॥ ६४ ॥
नर्तको भूमिकां प्राप्तो देवानामर्धमानुषः ।
रंगावतारी रुद्रस्य (कृष्णस्य) त्वर्धमानवः ॥ ६५ ॥
रामस्य स्यादेवरथश्शक्रस्य तु शचीबलः ।
रावणस्य तु रंगोपमर्दी कंसस्य भूमिकाम् ॥ ६६ ॥
प्रातः फालगलालेपो यस्तु स्त्रीभूमिकां गतः ।
स भ्रूकुंसो भ्रुकुंसश्च भ्रकुंसश्च भृकुंसवत् ॥ ६७ ॥
तत्तद्वेषो भूमिका स्यात्तद्धारी भूमिकागतः ।
पात्राणि नाट्येऽधिकृतास्सूत्रधारस्तु सूचकः ॥ ६८ ॥
नान्दी तु पाठको नान्द्याः पार्श्वस्थाः पारिपार्श्विकाः ।
विदूषकः केलिकिलः प्रहासी प्रतिभोऽपि च ॥ ६९ ॥
वेश्याचार्यः पीठमर्दष्षिड्गो वातसुतो विटः ।
मार्दंगिको मौरजिको वीणावादास्तु वैणिकाः ॥ ७० ॥
वेणुध्मास्स्युर्वैणविकाः पाणिवादास्तु पाणिघाः ।
नृत्तं गीतं वाद्यमिति नाट्यं तौर्यत्रिकं त्रिकम् ॥ ७१ ॥
संगीतकं प्रेक्षणार्थे नाट्योक्ते नाट्यधर्मिका ।

उत्तमोत्तमिकं श्लोकैस्सैन्धवं प्राकृतोक्तिभिः ॥ ७२ ॥
ताण्डवोऽस्त्री नृत्तलास्यनटनाक्षजनर्तनम् ।
नटितिर्नाटकी रासो नृत्तं बाह्यं स्वकल्पितम् ॥ ७३ ॥
रसभावांगहाराद्यैश्शास्त्रोक्तैरूपकाश्रयम् ।
नृत्तमाभ्यन्तरं नाम स्थायिभावात्मको रसः ॥ ७४ ॥
शृंगारहास्यबीभत्सवीराद्भुतभयानकाः ।
रौद्रश्च करुणश्चाष्टौ रसाश्शान्तोऽपि च क्वचित् ॥ ७५ ॥
स्थायिभावाः क्रमादेषां रतिर्हासो जुगुप्सनम् ।
उत्साहो विस्मयो भीतिः क्रोधश्शोकश्शमोऽपि च ॥ ७६ ॥
बीभत्समाने बीभत्सो विस्मेतर्यद्भुतो रसः ।
भयानको रसो भीते हास्यो हसितरि स्थितः ॥ ७७ ॥
बीभत्सो विकृतश्चित्रं त्वाश्चर्यं फुल्लमद्भुतम् ।
भयानकं प्रतिभयं भीमं भीष्मं भयंकरम् ॥ ७८ ॥
भैरवं भीषणं घोरमाभीलं दारुणश्च तत् ।
करुणस्सकृपो रौद्रस्तूग्रोऽमी विंशतिस्त्रिषु ॥ ७९ ॥
भावो मनोविकारस्स्यादनुभावोऽस्य सूचकः ।
विभावो हेतवस्तस्य भावस्य हृदि वर्त्स्यतः ॥ ८० ॥
स्थायिसंचारिभेदेन द्विधा भावो व्यवस्थितः ।
खेदो घर्मो निदाघस्स्यात् कालिका तु विवर्णता ॥ ८१ ॥
रोमोद्गमो रोमहर्षो रोमांचः कण्टकोऽपि च ।
रोमांक उल्लसनकमप्युल्बणकमित्यपि ॥ ८२ ॥
स्मितं त्वदृष्टदशने हासो वक्रोष्ठिका न ना ।
रुचिस्स्त्री हसितं दृष्टदन्ते विहसितं श्रुते ॥ ८३ ॥
सोत्प्राशे त्वाच्छुरितकं तथोपहसितं भवेत् ।
निकुंचितशिरोगात्रमट्टहासो महाहसे ॥ ८४ ॥



अतिहासस्त्वनुस्यूतोऽपहासोऽकारणात् कृते ।
स्वरभेदस्तु कल्कत्वं स्वरकंपस्तु वेपथुः ॥ ८५ ॥
आकारगोपनायामपटीकाप्यवकटापि स्त्री ।
न पुमानवहित्था स्यादङ्की गृहजालिकाप्यस्याम् ॥ ८६ ॥
क्रन्दितं रुदितं क्रुष्टं लोतोऽश्रु नयनोदकम् ।
अस्रु रोदनमास्रं च क्रीडा खेला च कुर्दनम् ॥ ८७ ॥
न स्त्री केलिः परीहासः क्रीडा लीला च नर्म च ।
जृंभणं तु त्रयी जृंभा मुखभेदस्तु जृंभिका ॥ ८८ ॥
एजनं वेपथुः कंपः प्रलयोऽस्पन्दनस्थितिः ।
आटोपावेगसंरंभसंभ्रमास्तु त्वरा त्वरी ॥ ८९ ॥
असौम्येऽक्षण्यदृष्टिस्स्यादवलोकस्त्वधः कृतः ।
उन्मीलनं स्यादुन्मेषो निमिषस्तु निमीलनम् ॥ ९० ॥
स्फुरितं स्पन्दितमथ भ्रुकुटिर्भ्रूकुटिस्त्रियाम् ।
भ्रकुटिर्भृकुटिस्सारी काली तीरतरंगिका ॥ ९१ ॥
चतुरं त्वलपा भ्रुकुटी रेचितं त्वेकया भ्रुवा ।
चेष्टाश्शृंगारजास्स्त्रीणां हावा लीलादयो दश ॥ ९२ ॥
वल्लभानुकृतिर्लीला विलासश्श्लिष्टविक्रिया ।
विच्छित्तिर्वस्त्रमाल्यादेर्न्यासोऽनास्थोपशोभितः ॥ ९३ ॥
सकृत्सुश्लिष्टरुदितस्मितादि किलिकिंचितम् ।
बिब्बोकोऽहंकृतेनैव प्राप्तेऽभीष्टेऽप्यनादरः ॥ ९४ ॥
विकृतं तूचितस्यापि लज्जादिभिरभाषणम् ।
मोट्टायितं वल्लभस्य चिन्ता कुट्टमितं पुनः ॥ ९५ ॥
स्तनोष्ठादेर्दृढस्पर्शात् (दुःखवत्) सुखसंभ्रमः ।
विभ्रमो दृग्विपर्यासो ललितं कोमलक्रमः ॥ ९६ ॥
सत्त्वाद्भावस्ततो हावो लीला हावात्समुत्थिता ।

अंगहारोऽगविक्षेपो नानाकरणसंहतिः ॥ ९७ ॥
करणान्यंगचेष्टास्स्युर्हरणं करणं समे ।
व्यंजकोऽभिनयो यस्तु सूच्योऽर्थोऽभिनयस्स च ॥ ९८ ॥
भूषणाद्यैर्गिरांगेन सत्त्वेनाभिनयाः कृताः ।
त्रिषु क्रमात्स्युराहार्यवाचिकांगिकसात्त्विकाः ॥ ९९ ॥
नाटकं नाटिका भाणो वीथिः प्रहसनं डिमः ।
ईहामृगः प्रकरणमंकस्समवकारकः ॥ १०० ॥
व्यायोगश्चेति रूपाणि नाट्यस्यैता विकल्पनाः ।
भारती सात्त्वती चैव कैशिक्यारभटीति च ॥ १०१ ॥
चतस्रो वृत्तयो भाषास्संस्कृताद्या विकल्पिताः ।
भारती संस्कृता वाणी शेषाश्चेष्टा इति क्वचित् ॥ १०२ ॥
अथ नाट्योक्तयो राजा देवो भट्टारकोऽपि च ।
महाराजश्च राज्ञी तु स्वामिनी महिषी तु चेत् ॥ १०३ ॥
देवी स्याद्भट्टिनी त्वन्या गणिका पुनरज्जुका ।
भट्टारिका राजमाता तत्पुत्री भर्तृदारिका ॥ १०४ ॥
तनयस्त्वस्य गोस्वामी (स्वामी) चाप्यथ राष्ट्रियः ।
स्यालोऽस्य युवराजस्तु कुमारो भर्तृदारकः ॥ १०५ ॥
पतिस्त्वार्य आर्यपुत्र आर्यौ मारिषमार्षकौ ।
आबुकस्तु पितांबा तु माता ज्येष्ठा स्वसौत्तिका ॥ १०६ ॥
बला बुसा कनिष्ठा स्यादावुत्तो भगिनीपतिः ।
बाला वासूर्भदन्तास्स्युश्शाक्यक्षपणकादयः ॥ १०७ ॥
आर्यभ्राता क्षुल्लतातो देवरस्त्वार्यपुत्रकः ।
हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति ॥ १०८ ॥
अब्रह्मण्यमवद्यं स्यान्निष्ठा निर्वहणं समे ।
गीतं गेयं च गानं च यत्तु तन्त्रीसमुद्भवम् ॥ १०९ ॥



तन्निर्गीतं बहिर्गीतं गान्धर्वं दिव्यमैश्वरम् ।
सप्त स्वरास्त्रयो ग्रामा मूर्छना एकविंशतिः ॥ ११० ॥
स्थानान्येकोनपंचाशदित्येष स्वरविस्तरः ।
स्थानान्युरश्शिरः कण्ठश्श्रावकः कण्ठजो गुणः ॥ १११ ॥
यो दूराच्छ्रावयत्यन्ये त्वन्वर्था मधुरादयः ।
काकीत्याद्याः कण्ठदोषास्तत्र काकी नृलिंगकः ॥ ११२ ॥
अगंभीरस्स्वरोऽथ स्यात्तंबिकी घ्राणनिर्गतिः ।
सन्दष्टो मेदसंमिश्रः कफिलो घर्घरः कफात् ॥ ११३ ॥
काकली तु कले सूक्ष्मे रागा गीतेर्विधाः पृथक् ।
वादित्रं वादनं वाद्यमातोद्यं तच्चतुर्विधम् ॥ ११४ ॥
ततं वीणादिकं वाद्यं तालं तु विततं घनम् ।
वंशादिकं तु सुषिरमानद्धं मुरजादिकम् ॥ ११५ ॥
घनं चाथाद्यवाद्ये द्वे विततं सहकीर्तने ।
विपञ्ची वल्लकी वीणा घोषवत्यनुवादिनी ॥ ११६ ॥
स्यात्कण्ठकूणिका चाथ स्याच्चित्रा परिवादिनी ।
तन्त्र्यश्चेत्सप्त ताश्चेत्स्युश्चतुर्दश चतुर्दशी ॥ ११७ ॥
एकादश्येकादश चेदेवं वीणा त्रयोदशी ।
वीणा स्थाणोरनालंबी गणानां तु प्रभावती ॥ ११८ ॥
विश्वावसोस्तु बृहती तुंबुरोस्तु कलावती ।
महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी ॥ ११९ ॥
कोलंबकस्तु कायोऽस्याः ककुभस्तु प्रसेवकः ।
वीणावंशशलाका तु कणिका कूणिका च सा ॥ १२० ॥
परिवादो वादनार्थ उपनाहस्तु बन्धनम् ।
तन्त्रीष्वंगुष्ठसंस्पर्शः कलस्तासां तु ताडनम् ॥ १२१ ॥
निष्कोटितोऽस्त्री सव्येन तलस्त्वन्येन पाणिना ।

लयस्तु साम्यं दशभिश्छन्दोऽक्षरपदैस्सह ॥ १२२ ॥
विलंबितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ।
तालः कालक्रियामानं क्रियांगुलिकरोद्भवा ॥ १२३ ॥
ताली त्रयी कांस्यताली विताली तालपत्रिका ।
झिंकिछ्लस्तु पयोऽथ स्याद्दर्दरः कलशीमुखः ॥ १२४ ॥
वंशे तु वंशिका पूरी मुरली वेणुका च सा ।
शृंगवाद्ये खरमुखं स्यादाघट्टलिकेति च ॥ १२५ ॥
तोट्टभी चाथ पिच्छोला पाली तु जतुकाहला ।
काहला तु कहाला स्याच्चण्डकोलाहलेति च ॥ १२६ ॥
नालिका सुषिरच्छेदे मुरली पुष्पिकेति च ।
चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी ॥ १२७ ॥
काण्डवीणा कुवीणा च ढक्कारी किन्नरीति च ।
सारिका कुंखुणी चाथ यो दण्डोऽल्पकलस्वनः ॥ १२८ ॥
दण्डिका कारवी सृष्टा किंखिरो जर्जरश्च सः ।
मुरजास्तु मृदंगास्ते त्वङ्क्यालिंग्योर्ध्वकास्त्रयः ॥ १२९ ॥
पूर्वः पूर्वो महानेषामेतत्पुष्करमण्डले ।
व्यापारस्त्वङ्गुलीनां यो मार्जना सा त्रिधा त्वियम् ॥ १३० ॥
मायूरी चार्धमायूरी तथा कर्मारवीति च ।
घर्घरी स्याद्घर्घरिका वादने मूर्च्छना न ना ॥ १३१ ॥
स्युष्षड्जर्षभगान्धारमध्यमाः पञ्चमस्तथा ।
धैवतश्च निषादश्च तन्त्रीकण्ठोद्भवास्स्वराः ॥ १३२ ॥
ते केकिचातकाजक्रुङ्पिकभेकगजस्वराः ।
दुंदुभिस्त्वानको भेरी भंभा नासूश्च नान्द्यपि ॥ १३३ ॥
स्याद्यशःपटहो ढक्का पटहस्त्वानकोऽस्त्रियौ ।
हुडुक्कस्तु हढक्कोऽस्त्री समौ पणवमर्द्दलौ ॥ १३४ ॥



वाद्यप्रभेदा डमरुमड्डुडिंडिमझर्झराः ।
तिमिलाटट्टरीवेध्यालुंबिकाकुंजिकादयः ॥ १३५ ॥
वादित्रलगुडे कोणा न नपुं शारिका स्त्रियाम् ।
तूर्योऽस्त्री वाद्यनिर्घोषे वादित्रं वादनं च तत् ॥ १३६ ॥
तूरकामध्वजौ चाथ सायंतूर्येऽक्षताडनम् ।
संवेशने तु भ्रुकुटः प्रकटः प्रतिबोधने ॥ १३७ ॥
पटहाडंबरौ युद्धे मंगले प्रियवादिका ।
देवतार्चनतूर्ये तु धूमलोऽस्त्री बलिर्न षण् ॥ १३८ ॥
क्षुण्णकं मृतयात्रायामर्धतूरो रणोद्यमे ।
नटोत्साहनमंके स्यात् पूर्वरंगास्त्वतः परे ॥ १३९ ॥
प्रत्याहारोऽत्र कुतपविन्यासे कुतपः पुनः ।
वाद्यवादकसामग्र्यामारंभो गीत्युपक्रमे ॥ १४० ॥
निवेशने गायिकानां न पुमानवतारणम् ।
लोकपालार्चने दिक्षु करणीपरिवर्तनम् ॥ १४१ ॥
नन्दी चारी महाचारी कथा सूत्रं प्ररोचना ॥ १४१ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां भूमिकाण्डे शूद्राध्यायः)

---

(भूमिकाण्डस्समाप्तः)

---

## अथ पातालकाण्डः

### सरीसृपाध्यायः

पातालं बलिसद्माधोभुवनं वडबामुखम् ।
रसातलं तलं नागलोको दैत्यक्षयो रसा ॥ १ ॥
अगाधो भुवनं रोकं रन्ध्रं निर्व्यथनं बिलम् ।
कुहरं सुषिरं छिद्रं श्वभ्रोऽस्त्र्यङ्क्षी सुषिर्वपा ॥ २ ॥
गर्तः पतेरो भूश्वभ्रमवखातोऽवटोऽवधिः ।
शेषोऽनन्तो नागराजस्सर्पराजस्तु वासुकिः ॥ ३ ॥
नागा बहुफणास्सर्पास्तेषां भोगवती पुरी ।
सर्पो द्विरसनो व्यालो दन्दशूकस्सरीसृपः ॥ ४ ॥
उरगो भुजगो जिह्मो भुजंगोऽहिर्भुजंगमः ।
फुल्लरीको लेलिहानः कुण्डल्याशीविषः फणी ॥ ५ ॥
दीर्घपृष्ठो विषधरः पन्नगो दृक्श्रवा हरिः ।
बिलौका गूढपाच्चक्री नाकुसद्मानिलाशनः ॥ ६ ॥
दर्वीकरा मण्डलिनो राजिमन्तश्च पन्नगाः ।
रथांगलांगलच्छत्रस्वस्तिकांकुशलांछनाः ॥ ७ ॥
फणिनश्शीघ्रगतयस्सर्पा दर्वीकराभिधाः ।
दीर्घा मन्दा मण्डलिनो मण्डलैर्विविधैर्युताः ॥ ८ ॥
राजिमन्तो राजियुता राजीला राजिलाश्च ते ।
वैकरञ्जास्संकरजाः त्रयाणां व्यन्तरास्तथा ॥ ९ ॥
षड्विंशतिर्मण्डलिनस्तथा दर्वीकराभिधाः ।
त्रयोदश च राजीला वैकरंजाभिधास्त्रयः ॥ १० ॥
निर्विषा द्वादशेत्येवमशीतिस्सर्पजातयः ।



दर्वीकरा महासर्पः फुल्लः पुष्पाभिकीर्णकः ॥ ११ ॥
कुंभीनसो लोहिताहिः कृष्णसर्पः कुलस्थकः ।
शंखपालो महापद्मः काकोदर इतीदृशाः ॥ १२ ॥
आशीविषाश्च सर्वेऽथ कृष्णसर्पो वलाहकः ।
अथ मण्डलिनस्तंतुर्गोनसो वृद्धगोनसः ॥ १३ ॥
किंशुकः पीनसः पिंगो देवभिन्न इतीदृशाः ।
गोनसस्तु तिलित्सस्स्याद्गोनासो घोणसोऽपि च ॥ १४ ॥
राजिलास्स्युः पुण्डरीकश्चित्रको लोहिताक्षकः ।
दिव्येलकस्सर्पराजः किकीसाद इतीदृशाः ॥ १५ ॥
अथ पुष्करसादस्स्यात्सर्पराजश्च सर्पभुक् ।
वैकरञ्जाः पोटगलस्तथा पुष्पाभिकीर्णकः ॥ १६ ॥
दिव्योऽलर्कोऽप्यथो सर्पा निर्विषा दिव्यकालिनी ।
पैंगराजोऽप्यजगरश्शुकपोत्रो वलाहकः ॥ १७ ॥
वर्षाभीश्शकलज्योतिः कोलकः पादवाहिकः ।
पुष्पकोऽहिपताकश्च गन्धाहिक इतीदृशाः ॥ १८ ॥
अलगर्द्दो जलव्यालो वाहसोऽजगरश्शयुः ।
मालुधानो मातुलाहिः पुण्डरीकस्तु डुंडुभः ॥ १९ ॥
राजिलः क्षीरकश्चाथ नानीपातस्स्वजस्समौ ।
अहीरिणिस्त्री द्विमुखी निर्मुक्तो मुक्तकंचुकः ॥ २० ॥
सर्पाचरस्तु निर्मोकः कंचुको निल्वयन्यपि ।
अहिनिल्वयनी चाथ स्फटा भोगः फणा न षण् ॥ २१ ॥
गरलं तु विषं क्ष्वेलो गरस्तु कृतकं विषम् ।
क्ष्वेलास्तु कालकूटाद्या मूलपुष्पफलात्मकाः ॥ २२ ॥
कालकूटः कटोऽथ स्याद्गौराद्रौ ब्रह्मवालुकम् ।

ब्रह्मघोषश्च घोषश्च पुंडरीकं तु वालुकम् ॥ २३ ॥
एवमन्येऽपि काकोलो वत्सनाभो हलाहलः ।
सौराष्ट्रिको ब्रह्मपुत्रशौक्लिकेयेन्द्रदारदाः ॥ २४ ॥
मुस्तः कुष्ठो मेषशृंग इत्याद्याश्चाथ वातिकः ।
विषवैद्यो जांगलिको व्यालग्राह्याहितुण्डिकः ॥ २५ ॥
गोधा निहाका मुसली वृक्षजा सा शयण्डकः ।
अथ गौधेरगौधारौ भुजगीगोधयोस्सुते ॥ २६ ॥
गौधेयश्चाथ चिक्रोडस्तालको रोमशीति च ।
नकुलः पिंगलोऽथैष कशो रोमशपुच्छकः ॥ २७ ॥
नकुलस्तु महान् बभ्रुर्धरीको नकुलाकृतिः ।
कृकलासः प्रतिरविश्शयानस्सरटश्शयः ॥ २८ ॥
स कामरूपी बिंबः स्यात् कृकवाकुस्सुदुंष्प्रभः ।
हालाहलस्त्वंजनिका ब्राह्मणी रक्तपुच्छिका ॥ २९ ॥
सृजया चाथ दैवज्ञा ज्येष्ठा स्याद्गृहगौलिका ।
टट्टनी मुसली पल्ली माणिक्या गृहगोधिका ॥ ३० ॥
कुड्यमत्स्या सुरश्वेता कुण्डृणाची सुराजिका ।
उन्दुरुर्मूषिकः काण्डमाखुस्तु खनकः क्रमः ॥ ३१ ॥
चुचुन्दरी तु गन्धाखुर्गिरिका बालमूषिका ।
वृश्चिके त्वाल्यलिद्रूणा मलं तत्पुच्छकण्टकः ॥ ३२ ॥
खर्जूरो वृश्चिका न स्त्री शूककीटोऽपि वृश्चिकः ।
आढा शतपदी कर्णजलूका ढारिकापि च ॥ ३३ ॥
मूषिका लूतिका लूता तन्तुवायश्च जालिकः ।
ऊर्णनाभस्तन्तुनाभः कृमिर्मर्कटकोऽपि च ॥ ३४ ॥
ऊर्णावहिश्चोर्णवाहिराशाबन्धोऽस्य जालकम् ।



लूतापट्टस्तु तत्कोश उद्दंशो मत्कुणस्समौ ॥ ३५ ॥
घुणः कृमिः काष्ठभवा लूतातस्स्यात् पिपीलिका ।
ब्राह्मणी स महान् पिंगः कपिशा तु गृहेंडिका ॥ ३६ ॥
उलंकलो महान् कृष्णस्सा मर्कोटपिपीलिका ।
या कृष्णाल्पाथ सूक्ष्मान्या जातिः कन्यापिपीलिका ॥ ३७ ॥
वम्रो वम्र्युपदीकोपजिह्विका चोपदेहिका ।
तत्प्राया शिथिली पिंगा यूकस्तु शिरसि क्रिमिः ॥ ३८ ॥
नीलांगा कृमिरन्तर्जः क्षुद्रः कीटो बहिर्भवः ।
पुच्छकास्तूभयेऽपि स्युः कीकसाः कृमयोऽणवः ॥ ३९ ॥
सरीसृपास्तु सर्पाद्या दन्दशूकास्तु दंशकाः ।
शलभाद्याः पतंगास्स्युर्यादांसि जलजन्तवः ॥ ४० ॥
पृथुरोमा झषो मत्स्यो मीनो वैसारिणस्तिमिः ।
जलपिप्पिक आत्माशी शकुली स्वकुलक्षयः ॥ ४१ ॥
स्थिरजिह्वस्संघचारी विसारश्शंबरोऽण्डजः ।
अथो सहस्रदंष्ट्रस्स्याद्वलेवालोऽपदालकः ॥ ४२ ॥
वदालस्त्वहिकश्चित्रः पाठीनो मृदुकण्टकः ।
फलकी स्याच्चित्रफली लोहितस्त्वावतारिकः ॥ ४३ ॥
एत्थालस्स्याच्चीननको महाशल्कस्सितायुधः ।
शृंगी तु सर्पशफरी प्रोष्ठी तु शफरी न षण् ॥ ४४ ॥
नलमीनश्चिलिचिमो गण्डकाश्शकुलार्भकाः ।
क्षुद्राण्डो मत्स्यसंघातः पोताधानं नपुंसकम् ॥ ४५ ॥
उद्दण्डपालनदलद्रेकराजीवकोत्पलाः ।
कुलीरः कर्कटः पृष्ठचक्षुः पार्श्वोदरप्रियः ॥ ४६ ॥
बिल्वकोऽण्डप्रहरणष्षोडशांघ्रिर्द्विधागतिः ।

भेके शालुः प्लवव्यंगशालूराण्डुककेण्डुकाः ॥ ४७ ॥
मण्डूकश्चैष गृहजो म्लानः कोणेपिशाचकः ।
पीतेऽस्मिन्कूलमण्डूको वारिपिण्डोऽश्ममध्यजः ॥ ४८ ॥
कृष्णास्या कृतभीश्श्वेता कोटिका तद्विपर्यये ।
चित्रे चित्राणुकः कूपे भवः कूपेपिशाचकः ॥ ४९ ॥
कूर्मः कच्छप ओहारः पंचगूढश्चतुर्गतिः ।
गुहाशयस्स्तूपपृष्ठः कशपो जीवथो भृथः ॥ ५० ॥
दुली द्रुणी च तत्कान्ता मकरो मत्स्यराड्झषः ।
खड्गनामा खड्गपुच्छस्तिमिशत्रुस्तिमिंगिलः ॥ ५१ ॥
तद्भेदो हस्तिमकरोऽथ स्याद्वारुणपाशकः ।
ग्राहस्तन्वस्तन्तुनागस्तन्द्रश्चामोघतन्तुकौ ॥ ५२ ॥
नक्रे तु कुंभी कुंभीरो गोमुखश्च महामुखः ।
तालुजिह्वश्शंखमुख आलास्यस्त्वंबुसूकरः ॥ ५३ ॥
उद्रस्तु जलमार्जारः पारी परकुलो वशी ।
शिशुमारस्त्वंबुकपिरुष्णवीर्यो महावसः ॥ ५४ ॥
असिप्लवो बुलूकी स्त्री वीरलस्तु महाझषः ।
त्रयी तु कंबुश्शंखोऽस्त्री सुग्रीवो मधुरस्वनः ॥ ५५ ॥
त्रिरेखष्षोडशावर्तस्स तु शंखनखोऽल्पकः ।
मुक्तास्फोटोऽब्धिमंडूकी शुक्तिर्मुक्ता तु मौक्तिकम् ॥ ५६ ॥
मुक्ताफलं शौक्तिकेयं गंगेष्टिः कटशर्करा ।
शंबूकः क्षुल्लकश्शंखः कपर्दस्तु वराटकः ॥ ५७ ॥
स्त्री चूर्णिरथशुक्तिस्स्याद्दुर्नामा दीर्घकोशिका ।
जलूका तु जलालोका सृक्था भूम्नि जलौकसः ॥ ५८ ॥
या जलौका तृणचरी सा स्यात्तृणजलायुका ।



गण्डूपदः किञ्चुलुको भूलता तत्प्रिया शिली ॥ ५९ ॥
स्थले करिनराश्वाद्या यावन्तस्सन्ति जन्तवः ।
ते जलेऽपि तदाख्यास्स्युर्जलपर्यायपूर्वकाः ॥ ६० ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
पातालकाण्डे सरीसृपाध्यायः)

---

### जलाध्यायः

सलिलं मलिनं तोयं मरुलं मेघजं कतम् ।
नीरं वारि पयोऽम्भोऽर्णो मेघपुष्पं कुलीनसम् ॥ १ ॥
पानीयं जीवनीयं कं जलमंबूदकं दकम् ।
विषं पाथो घनपदं भुवनं जीवनं वनम् ॥ २ ॥
वार्नपुंसि स्त्रियो भूमन्यापो घनरसः पुमान् ।
वह्लूरं तु सितं तोयमतिक्षारं तु किट्टिमम् ॥ ३ ॥
काचिमं स्यादतिस्वच्छमूतं कलुषमाविलम् ।
शीतलं स्वादुनि जले द्राग्भृतं तत्क्षणोद्धृतम् ॥ ४ ॥
जलाशया जलाधारास्ते त्वगाधजला ह्रदाः ।
अखातं देवखाते स्यात्पुष्करिण्यां तु खातकम् ॥ ५ ॥
आधारस्तु तटाकोऽस्त्री कासारस्सरसी सरः ।
आवाहो दीर्घिका वापी वेशन्तस्त्वल्पपल्वले ॥ ६ ॥
अन्धुरब्धः प्रहिः कूपश्चुण्डी चौण्डश्च चूतकः ।
अवखातस्तु कीर्णस्स्यादुत्कीर्णश्च पुरी स्त्रियाम् ॥ ७ ॥
विकिरस्स्यात्कीर्णजल उद्भिदस्तु जलोद्गमः ।
पीनाहस्तु स्त्रियां नेमिः कूपस्य मुखबन्धनम् ॥ ८ ॥
आहावश्च निपानश्च कूपपार्श्वेजलाश्रयः ।
प्रदरस्तूदपानोऽस्त्री बद्धांबु स्रोतसो धृतम् ॥ ९ ॥
आवालमालवालं स्यात्सेतौ वारणसंवरौ ।
उदधिस्सागरोऽपारो जलराशिरपांपतिः ॥ १० ॥
रत्नाकरो जलनिधिस्समुद्रो मकरालयः ।
उदन्वान्वरुणावासस्सरितांपतिरप्पतिः ॥ ११ ॥



सरित्पतिरकूपारः पारावारोऽब्धिरर्णवः ।
मितद्रुस्संवरः पेरुस्स्तंभी स्तंभिर्महोदधिः ॥ १२ ॥
कूलेऽस्य वेला मर्यादा पूर्णिर्वेलांबुवर्धनम् ।
डिंडीरोंऽबुकफः फेनो बुद्बुदस्थासकौ समौ ॥ १३ ॥
भंगस्तरंगो वीचिस्स्त्री तस्मिंस्त्वेव महत्यषण् ।
ऊर्मिः कल्लोल उल्लोलो लहर्युत्कलिकेति च ॥ १४ ॥
पोहित्थं तु प्रवहणं पोथश्चाप्यथ मंगिनी ।
नौस्तरिस्तरणी वेटी द्रोणी काष्ठांबुवाहिनी ॥ १५ ॥
उडुपं तु प्लवो भेल आरोह्योऽसौ तरण्डकः ।
केनिपातास्त्वरित्राणि पोलिन्दास्तु पुलिन्दकाः ॥ १६ ॥
कर्णं पृष्ठस्थितारित्रं नौशिरो मंगमस्त्रियाम् ।
नावो दण्डः क्षेपणी स्त्री कूपस्तु गुणवृक्षकः ॥ १७ ॥
आतरस्तरपण्यं स्यात् सेकपात्रं तु सेचनम् ।
सांयात्रिकः पोतवणिक् पोतवाहो नियामकः ॥ १८ ॥
कर्णधारस्तु निर्यामो नावारोहास्तु नाविकाः ।
अगाधमतलस्पर्शमस्थानश्च गभीरकम् ॥ १९ ॥
गंभीरश्चाथ नौतार्यं नाव्यं स्यात्ते नव त्रिषु ।
घट्टोऽवतारस्तीर्थोऽस्त्री प्रणाल्यक्ली पयोवहा ॥ २० ॥
सरणी हरणिर्भ्रूणिर्निर्गमद्वारि तु भ्रमः ।
उद्घाटनं घटीयन्त्रं पादावर्तोऽरघट्टकः ॥ २१ ॥
नदी स्रोतस्विनी कुल्या स्रवन्ती निम्नगा सरित् ।
हिरण्यवर्णा गिरिजा रोधोवक्रा पयस्विनी ॥ २२ ॥
तरंगिणी शैवलिनी तटिनी ह्रादिनी धुनी ।
अब्धा कूलंकषा सिन्धुरापगा वाहिनी वहा ॥ २३ ॥

त्रिस्रोता जाह्नवी गंगा देवसिन्धुस्त्रिमार्गगा ।
भागीरथी विष्णुपदी स्वर्वापी हरशेखरा ॥ २४ ॥
धर्मद्रवी त्रिमार्गा च पाताले भोगवत्यसौ ।
यमस्वसा तु यमुना कालिन्द्यर्कात्मजा यमी ॥ २५ ॥
नर्मदा स्यात्सोमभवा रेवा मेखलकन्यका ।
बाहुदा त्वर्जुनी सैता श्यामांगी सैतवाहिनी ॥ २६ ॥
तापी तु तपिनी शैब्या चन्द्रभासा तु चन्द्रिका ।
शतद्रूस्तु शुतुद्री स्याद्विपाशा तु विपाट् स्त्रियाम् ॥ २७ ॥
गोदावरी तु गोदा स्यात् कावेरी त्वर्धजाह्नवी ।
शरावती वेत्रवती तुंगभद्रा सरस्वती ॥ २८ ॥
ताम्रपर्णी कृष्णवर्णा गोमत्याद्याश्च निम्नगाः ।
नदस्सरस्वान् भिद्योद्ध्यौ कुल्या कर्षूः कृता नदी ॥ २९ ॥
वेणिर्धारा प्रवाहौघौ पूरस्तु जलबृंहणम् ।
चक्राणि पुटभेदास्स्युरावर्तः पयसां भ्रमः ॥ ३० ॥
जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः ।
सन्छेद्यं संगमो नद्योस्संभेदोऽप्यथ रोधसि ॥ ३१ ॥
तीरं कूलं प्रपातश्च प्रान्ते कच्छस्तटी त्रयी ।
पारावारे परात्रत्ये कूले पात्रं तदन्तरम् ॥ ३२ ॥
अस्त्री द्वीपोऽन्तरीपं क्ली पुलिनं तज्जलोत्थितम् ।
सैकतं सिकताप्रायं सिकता भूम्नि वालुकाः ॥ ३३ ॥
उत्पलं स्यात्कुवलयं कुवेलं कुवलं कुवम् ।
नीलोत्पलन्तु कन्दोष्ठं कन्दोब्जं कर्णभूषणम् ॥ ३४ ॥
इन्दीवरश्च नीलाब्जं रक्तपाणिकमुत्पले ।
वरोत्पलन्तु कल्हारं सौगन्धिकशिशुप्रिये ॥ ३५ ॥



कंसोत्पलं विगन्धि स्याद्वनजं वन्यकं जले ।
पद्मोऽस्त्री पंकजं कंजं कुविलीनं सरोरुहम् ॥ ३६ ॥
सरसीजं सरसिजं सारसं सरसीरुहम् ।
सरोजमब्जमप्पुष्पमरविन्दम्महोत्पलम् ॥ ३७ ॥
सहस्रपत्रं नलिनं शतपत्रं कुशेशयम् ।
बिसप्रसूनं राजीवं निर्लेपं बिसनाभिजम् ॥ ३८ ॥
पंकेरुहन्तामरसं कमलं दारदोलके ।
रक्ते तु पद्मे कण्डारं बिसखंडमथोंऽबुजम् ॥ ३९ ॥
चारुनालं कोकनदं श्वेते तु शुचिकर्णिकम् ।
पुण्डरीकं महापद्मं पवित्रं पुण्यगन्धिकम् ॥ ४० ॥
श्रीपुष्पं स्वर्णराजश्च कुमुदं गर्दभाह्वयम् ।
गन्धसोमं कुमुच्चन्द्रं कैरवश्चाथ लोहिते ॥ ४१ ॥
अस्मिन् कोकनदं जारं सुनालं रक्तकुण्डलम् ।
करहाटशिफा कन्दं नाला नालमथ त्रिषु ॥ ४२ ॥
मृणाली शतपर्वं क्ली बिसश्च नलिनी पुनः ।
बिसिनी पद्मिनीत्याद्याः पद्मस्तंबे सरस्यपि ॥ ४३ ॥
भवेत्पुटकिनी पद्मस्तंबमात्रे प्रकीर्तिता ।
कुमुद्वती कुमुदिनी शालूकं कन्दमौत्पलम् ॥ ४४ ॥
संवर्तिका नवदलं पक्ष्म क्ली कुसुमच्छदः ।
किंजल्कः केसरो न स्त्री बीजकोशो वराटकः ॥ ४५ ॥
कर्णिका कर्णिकं चाथ पद्माक्षं पद्मकर्कटी ।
हठः कुंभी वारिपर्णी किंचोलस्त्वंगलोड्यकः ॥ ४६ ॥
शुक्लकारन्तु कृसरं वृष्यकन्दं कशेरु च ।
शृंगाटकस्तु गरुलो दन्तबीजस्त्रिकण्टकः ॥ ४७ ॥

क्षीरबीजः क्षीरशुक्लस्तर्पणो जलकण्टकः ।
चिंचोटिका स्यादवका स्वादुमुस्ता गरोलिका ॥ ४८ ॥
शैवलो जलशूरस्स्यादवका जलनील्यपि ।
शैवालश्चाथ शीवालं चूर्णाभं लोहितं जले ॥ ४९ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
पातालकाण्डे जलाध्यायः)

---



## पुराध्यायः

पुर्यना नगरी पूः स्त्री स्थानीयं नगरं पुटः ।
पुर्याश्शाखापुरी गृह्या पुरेऽल्पे खेटमस्त्रियाम् ॥ १ ॥
ग्रामः पर्युपसन्निभ्यः प्रतेश्च वसथः परः ।
स्थानीयन्तु महाग्रामो ग्रामाः क्षुद्राः परे क्रमात् ॥ २ ॥
स्युः कर्वटं कार्वटिकं कार्वटं नृगपट्टने ।
कर्वटोऽस्त्री द्रोणमुखं पट्टनं पुटभेदनम् ॥ ३ ॥
पत्तनं चाप्यथानृगे नृगो द्रंगं विवेशिका ।
कटकोऽस्त्री संवासः स्कन्धावारश्च राजधानी स्यात् ॥ ४ ॥
शिबिरं मार्गनिवेशो ग्रामार्धे वाटकोऽस्त्री स्यात् ।
साकेतं स्यादयोध्यायां कोसलानन्दिनीति च ॥ ५ ॥
द्वारका तु द्वारवती मधुरा तु मधूषिका ।
मथुरा च मधूपघ्ना कौशं तु स्यात्कुशस्थली ॥ ६ ॥
वाराणसी शिवपुरी वारणास्यपि काशिका ।
मिथिला पूर्विदेहेषु कन्याकुब्जो महोदयः ॥ ७ ॥
हस्तिनी हास्तिनपुरं नागाह्वं हस्तिनापुरम् ।
अथास्त्री खाण्डवप्रस्थं जयन्तीपुरमाहुकम् ॥ ८ ॥
अवन्ती स्यात्तक्षशिला काकुन्दी वारणावतम् ।
देवीकोट्टः कोटिवर्षं माहिष्मत्यां वृकस्थली ॥ ९ ॥
ग्रामादिभूमिर्वास्त्वस्त्री सन्दंशस्त्वस्य कोणभूः ।
ब्रह्मस्थली वास्तुमध्यं ब्रह्मधारा तदन्तभूः ॥ १० ॥
प्रशस्ता वास्तुभूमिर्या प्रवीरा नन्दिनी च सा ।
सीमा तु सीमा मर्यादा ग्रामसीमोपशल्यकम् ॥ ११ ॥
प्रान्तरं ग्रामयोर्मध्यमुपघ्नं त्वन्तिकाश्रयः ।

पर्यन्तभूः परिसरः कटो-ग्रामेयकः पुनः ॥ १२ ॥
ग्रामीणं च त्रिषु ग्राम्ये ग्रामधान्यं तु खेटकम् ।
खेयं तु परिखाथास्त्री वप्रः प्राकारमूलिकः ॥ १३ ॥
प्राकारो वरणस्सालः प्राचीरन्त्वेष सच्छदिः ।
आवेष्टकस्तु वाटोऽस्त्री विवृतश्च वृतिद्रुमैः ॥ १४ ॥
वारिकूटो हस्तिमुखो नगरद्वारकुट्टके ।
गोपुरं तु पुरद्वारं दिक्षु निस्सारणं मुखम् ॥ १५ ॥
रथ्या प्रतोली विशिखाप्युपरथ्या तु दर्शनी ।
राजमार्गे संसरणं श्रीघण्टाभ्यां पथः परः ॥ १६ ॥
स एव पुरि दिङ्मार्गो वाहनी चोपविष्करम् ।
अगारं भवनं धाम वस्तं वस्त्यं निकेतनम् ॥ १७ ॥
शय्यं निवसनं सद्म बुन्दिरं वेश्म मन्दिरम् ।
निकार्यवासावसथनिकाय्यनिलयालयाः ॥ १८ ॥
न नोदवसितं न स्त्री गेहं पुंभूम्नि वा गृहम् ।
महाकीर्तनमोकश्च केतरं केतनं क्षयः ॥ १९ ॥
आथर्वणं शान्तिगृहमास्थानगृहमिन्द्रकम् ।
वासागारं तल्पगृहमरिष्टं सूतिकागृहम् ॥ २० ॥
कुप्यशाला तु सन्धानी पक्षिशाला कुनालिका ।
चतुरं हस्तिनां शाला वाजिशाला तु मन्दुरा ॥ २१ ॥
सन्दानिनी तु गोशाला हविश्शाला विषाणिका ।
आवेशनं शिल्पिशाला तन्त्रशाला तु गर्तिका ॥ २२ ॥
कुंभशाला पाकपुटी चित्रशाला तु जालिनी ।
संवासनं कर्मशाला प्रपा पानीयशालिका ॥ २३ ॥
वेशनी मुखशाला च पक्षशाला तु पक्षकः ।
तैलिशाला यन्त्रगृहं पोटकी कटकी च सा ॥ २४ ॥



इक्षुपीडनयन्त्रस्य शालिका त्विक्षुसूनिका ।
वपनी स्यात् खरकुटी शिल्पा चाप्यथ कुण्डनी ॥ २५ ॥
क्षणा बुशाल्याश्रमे तु पर्णशालोटजोऽस्त्रियाम् ।
चतुश्शालं संजवनं सत्रशाला शुभा स्थली ॥ २६ ॥
मठावसथ्यौ छात्रादिवासो वेण्ठं विटाश्रये ।
कुटीरस्तु कुटी पल्ली क्षेत्रपल्ली तु गर्गरी ॥ २७ ॥
सन्यासपल्ली निर्वीरा मण्टपोऽस्त्री जनाश्रयः ।
देवतायतनं चैत्यं विहारो लयनालिकः ॥ २८ ॥
सौधोऽस्त्री सुधया श्वेतं मेटो हर्म्यश्च मालिका ।
तदेव राजदेवानां स्यात्प्रासादः प्रसादनः ॥ २९ ॥
राजवेश्मोपकार्या स्यादुपकार्योपकारिका ।
स्वस्तिकस्सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥ ३० ॥
पिच्छन्दका राजधाम्नां सन्निवेशो निकर्षणम् ।
कूटागारं तु वलभी निर्यूहो मत्तवारणम् ॥ ३१ ॥
कुट्टिमोऽस्त्री बद्धभूमिः कोद्रंगस्तु तमंगकः ।
इन्द्रकोशोऽप्यथो मञ्च उद्घातो डुंडुरोऽपि च ॥ ३२ ॥
वेश्यागृहे कायमानं तथेदं केलिमण्डपे ।
अट्टालयोऽट्टः क्षौमोऽस्त्री तलिन्यट्टालिके समे ॥ ३३ ॥
चन्द्रशाला शिरोगेहं पणिकस्तु वणिग्गृहम् ।
आपणस्तु निषद्या स्यान्माटंको लवणापणः ॥ ३४ ॥
संवासो विपणिः पण्यवीथी हट्टस्तु पण्यभूः ।
आवालिर्हट्टवेश्माली वेशो वेश्याजनाश्रयः ॥ ३५ ॥
अवरोधः पराविद्धश्शुद्धान्तोऽन्तःपुरं वृषम् ।
अंकणस्त्वजिरं चारं वेदिका तु वितर्दिका ॥ ३६ ॥
कुड्योऽस्त्री भित्तिका कन्थाप्येडूकं त्वन्तरस्थिकम् ।

नीव्रं वलीकं चोलान्ते चोलोऽस्त्री पटलं छदिः ॥ ३७ ॥
सन्धिस्तु कुड्यछदिषोः कावातायनिका कला ।
अपशाला तु संहारी विटका तु विटाटिका ॥ ३८ ॥
गोपानसी तु वलभी छादने वक्रदारुणि ।
वेश्मस्थूणा गृहस्थूणमुल्बस्थूणा तु पादिका ॥ ३९ ॥
मेढी तु पादिकाशीर्षे स्थूणाशीर्षे शिली शिला ।
नासा धारकदारु स्यात्पालिकाष्ठं तु धारणा ॥ ४० ॥
कोणप्रतिग्राहि शिरोविष्टब्धिकरमाढकम् ।
सूकरी तूपरिस्थूणा सन्धिकाष्ठं तु वासिकम् ॥ ४१ ॥
द्वास्त्री द्वारं पक्षकं तु पक्षद्वारं खडक्किका ।
तोरणोऽस्त्री बहिर्द्वारं प्रच्छन्नद्वारमान्तरम् ॥ ४२ ॥
कवाटं द्वारबन्धोऽस्य धारके व्याघ्रकोऽस्त्रियाम् ।
उत्तरांगं तूर्ध्वदारु द्वारस्यैरुण्डकः पुनः ॥ ४३ ॥
गृहावग्रहणी देहल्यम्मरोदुंबरोंबुरा ।
सट्टं सपट्टी तत्पार्श्वे वृकवाला परालिनी ॥ ४४ ॥
नासा तु द्वार्यधोदारु शिला नासाविधारिणी ।
प्रघाणप्रघणालिन्दाः पिण्डकोऽलिन्दवासनौ ॥ ४५ ॥
बहिर्द्वारप्रकोष्टे स्युर्गृहश्रेणी तु वीथिका ।
अथ त्रय्यौ कवाटोऽपि कुवाटोऽप्यररं न पुम् ॥ ४६ ॥
पार्श्वद्वयस्थं तद्युग्ममनीरिति निगद्यते ।
विष्कंभकेऽस्य गुडको द्रुमशोऽप्यर्गला न षण् ॥ ४७ ॥
सूचिस्त्वयोऽर्गलैषा चेद्द्वारोर्ध्वे तूर्ध्वसूचिका ।
मर्कटं मर्कटी सूची विष्कंभार्थमथांकुटः ॥ ४८ ॥
साधारणी कुंचिका च द्वारयन्त्रं तु तालकम् ।
एतस्योद्घाटनं यन्त्रं ताल्यपि प्रतिताल्यपि ॥ ४९ ॥



अर्गलं द्वारपटलं विदण्डस्त्वर्गला त्रयी ।
अस्त्री तु घर्घरोऽट्टादेरधोद्वारकवाटिका ॥ ५० ॥
गर्भागारोऽपवरको भ्रमन्तो गृहकोऽल्पकः ।
आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहणी ॥ ५१ ॥
कोणाश्रौ नर्यणिर्न क्ली स्त्रियोऽश्रिस्त्वक्तिकोटयः ।
सम्मार्जनी शोधनी तन्मलेऽवकरसंकरौ ॥ ५२ ॥
दन्तिका नागदन्तास्स्युर्लगनी वस्त्रधारणी ।
कपोतपाली स्त्री न स्त्री विटंकोऽथ गवाक्षकम् ॥ ५३ ॥
वातायनं गवाक्षश्च रसवत्यां महानसम् ।
उद्धानमश्मन्तमधिश्रयणी चुल्लिरन्तिका ॥ ५४ ॥
हसन्त्यङ्गारशकटी हसन्यङ्गारधान्यपि ।
पिठरस्स्थाल्युखा कुंभिः पिधानं स्यादुदञ्चनम् ॥ ५५ ॥
कटाहः कर्परो लट्वो मणिकस्स्यादलिंजरम् ।
भ्राष्ट्रः पुंस्यंबरीषोऽस्त्री कंदुर्ना स्वेदनी स्त्रियाम् ॥ ५६ ॥
ऋचीषं पिष्टपचनं मल्लो मल्ली च कोशिका ।
वर्धनी तु गलन्त्यालुः कर्करी करकोऽपि च ॥ ५७ ॥
भृङ्गारो हेमकरकः करंको नालिकेरजः ।
निपो घटः कुटः कुंभः करीरः कलशी त्रयी ॥ ५८ ॥
घटी पारी कपाली तु त्रयी घोलश्च कर्परः ।
शालाजिरो वर्धमानश्शरावोऽस्त्री दृतिस्तु ना ॥ ५९ ॥
खल्वं क्लीबे चर्ममयी त्वालुः करकवर्तिका ।
स्नेहपात्रं कुतूः कृत्तिस्सैवाल्पा कुतुपः पुमान् ॥ ६० ॥
अवगाहो जलद्रोणिरुष्ट्रिका कांचिकादिभृत् ।
भद्रकुंभः पूर्णकुंभस्स्थालं स्यात्कांस्यपात्रकम् ॥ ६१ ॥
भाण्डमावपनेऽमत्रं भाजने पात्रमित्युभे ।

चर्मकोशं तु कललं करालं तरलश्च तत् ॥ ६२ ॥
पेटकः पिटकः पेटा मञ्जूषा सा तु चर्मणा ।
वृता तरिः स्त्री तमतो वस्त्रकोशं करोटकम् ॥ ६३ ॥
स्यूतः प्रसेवकोऽथ स्यात्समुद्रस्संपुटः पुटः ।
धान्यकोष्ठे कुसूलोऽथ कण्डोलः पिटकः पिटः ॥ ६४ ॥
प्रस्फोटनं शूर्पमस्त्री न स्त्री तितउ चालनी ।
अयोनिर्मुसलोऽस्त्री स्यादुदूखलमुलूखलम् ॥ ६५ ॥
प्रस्फोटनं तु पवनमववातस्तु कण्डनम् ।
फलीकृतस्तण्डुलस्स्याद्धान्यानां तु तुषस्त्वचि ॥ ६६ ॥
शंबूकास्तु कणास्सूक्ष्मास्तण्डुलस्य तु यो मलः ।
शंबूकः कण्डनं चासौ ज्येष्ठांबु तु तदंबुनि ॥ ६७ ॥
गोधूमचूर्णे शमिता चिक्कसो यवचूर्णके ।
पृथुकश्चिपिटो लाजाः पुंभूम्नि परिवारकः ॥ ६८ ॥
खदिका तु गुडाद्याढ्यलाजसक्तुषु तर्पणम् ।
सुस्विन्नभृष्टमृदिता उत्कुञ्चः कल्कपिण्डिकाः ॥ ६९ ॥
पिण्डिर्ना पिष्टधानादिचूर्णे मौडी तु मर्मरा ।
उलुंबं बुंबिका बुंबी चक्षुष्यास्सक्तवः कणाः ॥ ७० ॥
ते घृतादियुता मन्थः करंभो दधिसक्तवः ।
धानास्त्रियो भृष्टयवा दारपत्रस्तु पोलिकः ॥ ७१ ॥
पूपस्तु पिष्टकोऽपूपः कोकुन्दाः पिष्टपिण्डिकाः ।
उत्कारिका चूर्णपूपे कुल्माषा यवपिष्टकाः ॥ ७२ ॥
शमिता त्वम्लदुग्धार्द्रा पक्का खण्डे घृतोत्तरे ।
संयावोऽयं युतश्चूर्णैः खण्डैलामरिचार्द्रकैः ॥ ७३ ॥
क्षीराढ्यश्शमितापिण्डो घृतपूरो घृते शृतः ।
फेनकश्शमिता शुक्ला घृतपक्कालपशर्करा ॥ ७४ ॥



शष्कुली त्वायता पिष्टगुडतैलतिलैः कृता ।
जीवनान्नाशनांधांसि कूरं भक्तं प्रसादनम् ॥ ७५ ॥
पाजो वाजोऽप्योदनोऽस्त्री भिस्सा स्त्री दीदिविर्न षण् ।
पुन्नपुंसकयोश्चोरं करमाहार्यमित्यपि ॥ ७६ ॥
दग्धान्नं भिस्सिटा झिल्ली परमान्नं तु पायसम् ।
क्षैरेयी चाथ मण्डोऽस्त्री रसाग्रोऽथ करोटिका ॥ ७७ ॥
यवागुल्या स्याद्वनाम्लायां यवागुली मण्डिका समे ।
मासराचामनिस्स्रावप्रस्रावा भक्तमण्डके ॥ ७८ ॥
वाल्यमण्डो यवैर्भृष्टैर्लाजमण्डोऽन्वितार्थकः ।
तिलतण्डुलमाषैस्तु त्रिरसा कृसरा त्रयी ॥ ७९ ॥
यवागूरुष्णिका श्राणा पिच्छा सा तु घनाद्रवा ।
विलेपी स्याद्विलेप्या च सा पेया तरणान्यथा ॥ ८० ॥
खलिः स्त्री तण्डुलैः पिष्टैर्जले पक्का घनद्रवा ।
सौवीरं काञ्चिकं कुण्डमारनालं गृहोदकम् ॥ ८१ ॥
अवन्तिसोमं रक्षोघ्नं शुक्ताभिषुतकुञ्जलम् ।
गोलकुल्माषसन्धानान्यौदरो मधुरा न षण् ॥ ८२ ॥
तद्धान्ययोनि धान्याम्लं तुषांबु तुषसंहितम् ।
मूलकाद्यैस्संहिते स्यान्मूलकादिसुतं न ना ॥ ८३ ॥
मूलकच्छदसन्धानं शिण्डाकी स्वादुसुद्रवा ।
यन्मस्त्वादि शुचौ भाण्डे सक्षौद्रगुडकांचिकम् ॥ ८४ ॥
त्रिरात्रं धान्यराशिस्थं तच्छुक्तं शुद्धमित्यपि ।
निष्ठानं तेमनं तच्च व्यञ्जनं स्याद्घृतादि च ॥ ८५ ॥
सूपोऽस्त्री प्रहितं सूदोऽप्युपदंशोऽपदंशकः ।
स्त्री पक्कभृष्टे भरुटा सगुडाज्योषणैः पुनः ॥ ८६ ॥
वेशवारः पिष्टमांसे पक्के भूतिस्ततोऽन्यथा ।

रसको मांसनिष्क्वाथः पिष्टमांसकृतो रसः ॥ ८७ ॥
सोरावासो निर्लवणः परिशुष्कं पुनर्धृते ।
सिक्ता मांसं मृदूष्णांबुपक्कं युक्तं कणादिभिः ॥ ८८ ॥
उत्तप्तं शुष्कमांसं स्याद्वल्लूरा त्रय्यथ स्त्रियाम् ।
पेशिश्शुण्ठः पिविण्डस्तु निकृतोऽवयवः पशोः ॥ ८९ ॥
शाकोऽस्त्री हरितं शिग्रुः स्त्री तन्नाले कडंबकः ।
कन्दमस्त्री मूलसस्यं वेशवार उपस्करः ॥ ९० ॥
लेह्यं पेयं च चूष्यं च खाद्यमास्वाद्यमित्यपि ।
पञ्चामृतमिदं स्वाद्यं मुक्त्वात्वन्नं चतुर्विधम् ॥ ९१ ॥
त्रिष्वाद्भुताद्भक्षकारे द्वौ कान्दविकपौपिकौ ।
सूपकारे त्वारालिकसूदान्धसिकवल्लवाः ॥ ९२ ॥
गुणौदनिकसूपाश्च लवणो लवणोत्कटः ।
पक्कं तु रन्धितं सिद्धं भृष्टं पक्कं विनांबुना ॥ ९३ ॥
प्रणीतमुपसंपन्नं प्रयस्तं स्यात्सुसंस्कृतम् ।
शूलाकृतं भटित्रं च शूल्यमुख्यं तु पैठरम् ॥ ९४ ॥
सार्पिष्कदाधिकाद्यं स्यात् सर्पिर्दध्यादिसंस्कृते ।
शीनं स्त्यानं शृतं पक्कं विलीनं विद्रुतं द्रुतम् ॥ ९५ ॥
तक्रं कपित्थचांगेरीमरीचाजाजिचित्रकैः ।
यत् पक्कं गुडजूषोऽसावलकांबलिकोऽपरः ॥ ९६ ॥
दध्यम्लो लवणस्नेहतिलमाषविपाचितम् ।
अपक्कतक्रं सव्योषचतुर्जातगुडार्द्रकम् ॥ ९७ ॥
सजीरकं रसालस्स्यान्मार्जिता शिखरिण्यपि ।
सा जाजी डाडिमव्योषं पटे घृष्टं च सट्टकम् ॥ ९८ ॥
बलकं स्याद्गुडक्षीरं यमकं तैलसर्पिषी ।
त्रिस्नेहं त्रैवृतं मार्जा चतुस्स्नेहं वसान्वितम् ॥ ९९ ॥



मधु सर्पिश्च मिथुनं यूषोऽस्त्री यूः पुमान्रसे ।
परिवेषणं वर्धनं च प्रतीच्छा पततो ग्रहः ॥ १०० ॥
कबलः कबतो ग्रासो गुडः पिण्डो गुडेरकः ।
गण्डोरश्च गडोलश्च चर्वणं चूषणं रदैः ॥ १०१ ॥
जग्धिस्तु निघसो न्यादो लेपोऽप्यभ्यवहारवत् ।
प्रत्यवसानमशनं भोजनं जेमनादने ॥ १०२ ॥
स्वदनं परिपत्रं च सग्धिः स्त्री सहभोजनम् ।
चूषणं तु रसादानं जिह्वास्वादस्तु लेहनम् ॥ १०३ ॥
धीतिस्तु धयनं पानं जक्षा खादनभक्षणे ।
कामं निकामं पर्याप्तं प्रकामं च यथेप्सितम् ॥ १०४ ॥
पर्याप्तं तु परित्राणं हस्तवारणमित्यपि ।
तृप्तिस्सुधा च सौहित्यं तृप्तं तु सुहितं त्रिषु ॥ १०५ ॥
करंबस्सेकमिश्रान्ने फेला पिण्डेऽधिकोज्झिते ।
खण्डपर्कटमुद्वेगं तांबूलं मुखभूषणम् ॥ १०६ ॥
अम्बलोर्णं चर्वितेऽस्य चूर्णेऽस्य त्वंबला रसे ।
करङ्को वेडादिकृते पूगताम्बूलभाजने ॥ १०७ ॥
स्यात्पूगावपनी गन्त्री कर्त्तर्युद्वेगकर्तरी ।
भवेत्क्षुरसमुद्गन्तु त्रिष्वाकर्णकरन्धके ॥ १०८ ॥
अस्त्री तु पुस्तकं सिन्दूरादेर्दारवभाजने ।
चातुरीकं त्रिषु भवेच्चन्दनद्रवभाजने ॥ १०९ ॥
नागवल्लीपलाशानां तैलाक्तानां रसातलः ।
निष्ठानं वीतकं प्रोक्तं चन्द्रमन्दारचूर्णधृत् ॥ ११० ॥
वीरस्नाका या तु शरशलाकायन्त्रनिर्मिता ।
पाठार्थमुद्गृहीता स्यात् कबली पत्रपञ्चिका ॥ १११ ॥
परिकर्मांगसंस्कारः कंकतस्तु प्रसाधनः ।

प्रसाधनं स्यादभ्यंगस्सोत्पाताच्छुरिते समे ॥ ११२ ॥
उद्वर्तनं तूत्सादनं स्नानं त्वाप्लाव आप्लवः ।
उपस्पर्शोऽभिषेकश्च गोसव्यं गोमयेन तत् ॥ ११३ ॥
सुगन्धामलकैस्स्नानं यत्तल्लक्ष्मीनिकेतनम् ।
यत्तु सर्वौषधिस्नानं तन्मंगल्यमलोचकम् ॥ ११४ ॥
यन्मृत्तिकांभसा स्नानं दिष्टं देशनिकं च तत् ।
ऋषीणां तर्पणं यत्तत् कौलकुल्यं कुलं च तत् ॥ ११५ ॥
सिक् स्त्री पटोऽस्त्री सिचयो वासो वसनमंशुकम् ।
आच्छादनं निवसनं वसितं वस्त्रमंबरम् ॥ ११६ ॥
चेलं च तच्चतुर्धा स्यात्त्वक्फलक्रिमिरोमजम् ।
वाल्कं क्षौमादिके वस्त्रे फाले कार्पासवादरौ ॥ ११७ ॥
कौशेयं कृमिकोशोत्थे रांकवं मृगरोमजे ।
पत्रोर्णं धौतकौशेयं महामूल्यं महाधनम् ॥ ११८ ॥
अग्निगौचं वक्रवल्लीपदे वज्रांशुकं तथा ।
राजावर्तं चित्रपटे राजवर्तो नवश्रियाम् ॥ ११९ ॥
अहतं निष्प्रवाणिस्स्यात् तन्त्वकं च नवांशुके ।
निवीतं प्रावृते धौतयुग्मं तूद्गमनीयकम् ॥ १२० ॥
आप्रपदीनं प्रपदव्यापि वाल्कादयस्त्रिषु ।
अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके ॥ १२१ ॥
चण्डातकं वरस्त्रीणां स्यादर्धोरुकमंबरम् ।
संव्यानमुत्तरीयं क्षौमं सूक्ष्मं दुकूलं स्यात् ॥ १२२ ॥
वैकक्ष्यं तु बृहतिका प्रावारश्चोत्तरासंगः ।
चन्द्रोदय उल्लोचः कदरश्चन्द्रातपो वितानोऽस्त्री ॥ १२३ ॥
मशकहरी तु चतुष्की शिरसि सिगुष्णीषमस्त्री स्यात् ।
काण्डपटस्स्यादपटी प्रतिसारा यवनिका तिरस्करिणी ॥ १२४ ॥



दूष्यं स्थुलं पटकुटी गुणलयनी केणिका तुल्याः ।
नालकं नलकं चापि नलिकं चेत्यपि त्रयः ॥ १२५ ॥
पर्याया धनुरादीनां कवचेऽप्राणिनाममी ।
निचोलः प्रच्छदपटो वरासी स्थूलशाटिका ॥ १२६ ॥
चोली तु शाटिका शाटो वरकोऽस्त्री द्विखण्डकः ।
निशारो हिमसंपातत्राणे जीर्णे पटच्चरम् ॥ १२७ ॥
निचोलः कंचुकश्चोलः कूर्पासश्चांगिकोऽस्त्रियाम् ।
चीवरं भिक्षुसंघाटी कन्थाकन्थटिके समे ॥ १२८ ॥
कक्ष्यापटस्तु कौपीनं समौ रल्लककंबलौ ।
विशालस्त्वाविकौरभ्रौ हस्तिकर्णस्तु रोचकः ॥ १२९ ॥
शाणी गोणी छिद्रवस्त्रैश्चीरं खण्डलमस्त्रियाम् ।
नक्तकः कर्पटो वस्त्रग्रन्थोऽस्त्री नीविरुच्चयः ॥ १३० ॥
कक्षः कच्छो गुह्यबन्धः कक्ष्या पृष्ठे कृतोऽञ्चलः ।
वस्त्रान्तस्त्वञ्चलो वस्तिस्त्वङ्की भूम्नि दशा न षण् ॥ १३१ ॥
पुष्कलस्तुम्बिका चाथ प्रान्तत्रसरकेसराः ।
आकल्पवेषौ नैपथ्यं प्रतिकर्म प्रसाधनम् ॥ १३२ ॥
अलंकारस्त्वाभरणं भूषणं मण्डनं पुनः ।
विभूषणं परिष्कारः कर्णिका कर्णभूषणम् ॥ १३३ ॥
उत्क्षिप्तिका तु कर्णाकस्तालपत्रं तु तालकम् ।
कर्णपूरस्तु पुष्पाद्यैस्ताडंगो दन्तकादिभिः ॥ १३४ ॥
वालिका कर्णपृष्ठस्था कुण्डलं कर्णवेष्टनम् ।
मौलिः कोटीर उष्णीषं किरीटं मकुटोऽस्त्रियाम् ॥ १३५ ॥
चूडामणिश्शिरोरत्नं स्वस्तिकस्तु त्रिकोणकः ।
वालपाश्या पारितथ्या पत्रपाश्या ललाटिका ॥ १३६ ॥
ग्रैवेयकं कण्ठभूषा लंबनं तु ललंतिका ।

स्वर्णैः प्रालंबिकाऽथोरस्सूत्रिका मौक्तिकैः कृता ॥ १३७ ॥
हारो मुक्तावली स्त्री स्यात्तद्भेदा यष्टिसंख्यया ।
देवच्छन्दश्शतं साष्टमिन्द्रच्छन्दस्सहस्रकम् ॥ १३८ ॥
तस्यार्धं विजयच्छन्दो हारस्त्वष्टोत्तरं शतम् ।
अर्धं रश्मिकलापोऽस्य द्वादशस्त्वर्धमाणवः ॥ १३९ ॥
द्विर्द्वादशोऽर्धे गुच्छोऽथ पंच हारः फलं लता ।
अर्धहारश्चतुष्षष्टिर्गुच्छमाणवमन्दराः ॥ १४० ॥
अपि गोस्तनगोपुच्छावर्धमर्धं यथोत्तरम् ।
एकावल्यनुण्ठी च हारस्स्यादेकयष्टिकः ॥ १४१ ॥
यष्टिर्नक्षत्रमालैका सप्तविंशतिमौक्तिका ।
गुडकैर्मणिसोपानं चाटुकारश्च हेमजैः ॥ १४२ ॥
हारमध्यस्थितं रत्नं तरलो नायकोऽपि च ।
केयूरमंगदं भूषा दोर्मूले कंकणं करे ॥ १४३ ॥
आवापकः पारिहार्यं वलयं कटकोऽस्त्रियाम् ।
पादेऽसौ हंसकस्त्रीणामंगुलीयकमूर्मिका ॥ १४४ ॥
साक्षरांगुलिमुद्रा सा क्षुद्रघंटा तु किंकिणी ।
शिंजिनी ना तुलाकोटिर्मंजीरो नूपुरोऽस्त्रियौ ॥ १४५ ॥
कटिसूत्रं सारसनं मेखला रशनाथ सा ।
स्त्रीकट्यां सप्तकी कांची पुंस्कट्यां शृंखला त्रयी ॥ १४६ ॥
स्त्री चर्क्विर्वर्णकालेपावनुबोधः प्रबोधनम् ।
मार्ष्टिश्चर्चा च चर्चिक्यं समालंभनमित्यपि ॥ १४७ ॥
स्थासको हस्तबिंबस्स्यात् पत्तिच्छेदास्तु राजयः ।
चित्रं तमालपत्रं क्ली तिलकोऽस्त्री विशेषकम् ॥ १४८ ॥
पत्तिस्तु पत्रकं लेखा बाहुगण्डस्तनादिषु ।
पत्रांगुलिः पत्ररेखा सा ललाटे ललाठिका ॥ १४९ ॥



राढा शोभा छवी रुक् त्विट् सुषमा परमा छविः ।
त्रिगन्धमेलात्वक्पत्रैस्त्रिसुगन्धं त्रिजातकम् ॥ १५० ॥
चातुर्जातं तदेव स्यान्नागकेसरकेसरैः ।
सर्वगन्धमिदं सेन्दुतक्कोलागरुसिल्हकम् ॥ १५१ ॥
लवंगपूगतक्कोलजातीफलहिमांशवः ।
पंच पंचसुगन्धं स्यादथ तक्कोलकुंकुमैः ॥ १५२ ॥
कस्तूर्यगरुकर्पूरास्सुगन्धो यक्षकर्दमः ।
यावो द्रुमामयोऽलक्तो लाक्षा रक्ता जतु क्रिमिः ॥ १५३ ॥
कालानुसार्यं कालेयं जावकं चाप्यथ स्रजि ।
मालांकिलिरथापीडे वतंसोत्तंसशेखराः ॥ १५४ ॥
केशेषु गर्भकं माल्यं प्रालंबं कण्ठलंबितम् ।
प्रभ्रष्टकं शिखालंबि पुरोन्यस्तं ललामकम् ॥ १५५ ॥
वैकक्ष्यं तिर्यगुरसि स्थितं निर्माल्यमुज्झिते ।
संस्कारो गन्धधूपाद्यैरपुमानधिवासनम् ॥ १५६ ॥
अञ्जनं त्वक्षिसंस्कारः कज्जलं धूमयोनि तत् ।
चूर्णानि वासयोगास्स्युः पिष्टातः पटवासकः ॥ १५७ ॥
रचना स्यात् परिस्कन्धो भावना वासना समे ।
अथोपकरणं सर्वं परिबर्हः परिच्छदः ॥ १५८ ॥
व्यजनं तालवृन्तं स्यात् धवित्रं चर्मणा कृतम् ।
आलावर्तस्तु वस्त्रेण चामरं तु प्रकीर्णकम् ॥ १५९ ॥
पतद्ग्रहः प्रतिग्राहो वालोऽस्त्री दारुणा कृतः ।
आसन्दी स्त्री नरि प्रेंखो दीपवल्ली तु दीपिका ॥ १६० ॥
दीपवृक्षस्तदाधारो दशा वर्तिरथ स्त्रियाम् ।
वर्तिर्गृहमणिर्दीपो गिरीयकगुडौ गिरिः ॥ १६१ ॥
दर्पणो मुकुरादर्शौ कन्दुको गण्डुकस्समौ ।

पादुकानुपदीना स्यादुपानत् पादरक्षिणी ॥ १६२ ॥
उपला तु दृषत्पुत्रः शिला माता दृषत्समाः ।
दर्विस्तु कंविस्तर्डूस्स्यात् खजाका दारुहस्तकः ॥ १६३ ॥
विष्टरं त्वासनं पीठं दारुजं वेत्रजं पुनः ।
आसन्दी मञ्चकः खट्वापाश्रयो मत्तवारणम् ॥ १६४ ॥
शय्या पर्यङ्कपल्यङ्कौ शयनं शयनीयवत् ।
प्रस्तरस्संस्तरश्शय्या रचिता पल्लवादिभिः ॥ १६५ ॥
कटः किलिञ्जो वर्णस्तु परिस्तोमः कुथा त्रयी ।
नमतं चाप्यास्तरणं प्रच्छदस्तूत्तरच्छदः ॥ १६६ ॥
उपधानं तूपबर्हमुच्छीर्षमुपबर्हणम् ।
संवापश्शयनं स्वापस्संवासो वासनं सह ॥ १६७ ॥
शयने शयसंवेशावुपशायोऽन्तिकेशयः ।
पर्यायादथ पर्यायाः परिशायस्समंततः ॥ १६८ ॥
कामध्वजः कामोत्सवः शृङ्गारः कामविक्रिया ।
परिरंभः परिष्वङ्ग आश्लेष उपगूहनम् ॥ १६९ ॥
आलिङ्गनमपि क्रोडीकरणं चाङ्कपाल्यपि ।
ग्राम्यधर्मः कामकेली रतिर्निधुवनं रतम् ॥ १७० ॥
मेहनं मिथुनत्वं च समे निंसनचुंबने ।

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
पातालकाण्डे पुराध्यायः)

---



भूताध्यायः

भूतानि प्राणिनो जीवा जन्तवो जन्यवोऽङ्गिनः ।
पुंसः प्राक् त्रिषु गुल्माद्यमुद्भिदुद्भिज्जमुद्भिदम् ॥ १ ॥
स्वेदजा दंशयूकाद्या नृपश्वाद्या जरायुजाः ।
अण्डजाः पक्षिसर्पाद्याः पुमांस्तु पुरुषो वृषः ॥ २ ॥
पूरुषो नाप्यथ क्लीबः पण्डषण्डो नपुंसकम् ।
तृतीयाप्रकृतिश्चाथ पोटा स्त्रीपुंसलक्षणा ॥ ३ ॥
स्त्री योषिल्ललना योषा वशा सीमन्तिनी वधूः ।
वनिता महिला नारी तद्भेदास्तु नितंबिनी ॥ ४ ॥
प्रतीपदर्शिनी वामा प्रमदा भीरुरंगना ।
अबला भामिनी कान्ता कामिनी वामलोचना ॥ ५ ॥
सुन्दरी रमणी रामा वेणिनी चान्वितार्थकाः ।
कुमारी कन्यका कन्या किंचित्प्रौढा महोदया ॥ ६ ॥
अचिरव्यूढा तु वधूः पतिंवरा तु स्वयंवरा वर्या ।
कुलपालिका कुलस्त्री कुल्याथ सती पतिव्रता साध्वी ॥ ७ ॥
स्त्रीव्यञ्जनकृता श्यामा चीरिणी तु सुवासिनी ।
प्राप्तर्तुर्दिक्करी राका युवतिस्तलुनी चरी ॥ ८ ॥
वधूटी च चिरंटी च द्वितीयवयसि स्त्रियाम् ।
स्वैरिणी धर्षिणी पुंश्चल्यसती कुलटेत्वरी ॥ ९ ॥
बन्धकी पांसुला चर्चा चला नग्ना तु कोट्टवी ।
भिक्षुकी श्रमणी मुण्डा तीव्रकोपा तु भामिनी ॥ १० ॥
विप्रश्निका त्वीक्षणिका दैवज्ञा प्रश्नवादिनी ।
कामुकेच्छुः कामुकी तु वृषस्यन्ती रतार्थिनी ॥ ११ ॥

वरारोहोत्तमा नारी सैव स्यान्मत्तकाशिनी ।
कामात् कान्तं याति यासावविनीताभिसारिका ॥ १२ ॥
अध्यूढा चाधिविन्ना च कृता यस्यास्सपत्निका ।
वीरपत्नी वीरभार्या वीरमाता तु वीरसूः ॥ १३ ॥
पतिवत्नी जीवपतिर्विश्वस्ता विधवाथ सा ।
कात्यायनी द्वितीयं चेद्वयः काषायमंबरम् ॥ १४ ॥
उदक्या मलवद्वासा आत्रेयी पुष्पवत्यपि ।
रजस्वला च मलिना स्त्रीधर्मिण्यृतुमत्यपि ॥ १५ ॥
ऋतुः पुंस्यार्तवं रक्तं पुष्पं चाथानृतुर्वधूः ।
निष्कलापन्नसत्त्वा तु स्त्र्यन्तर्वत्नी च गर्भिणी ॥ १६ ॥
अद्यश्वीना तु सा या स्यादद्य श्वः प्रसवोन्मुखी ।
विजाता तु प्रजाता च प्रसूना च प्रसूतिका ॥ १७ ॥
जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ।
गर्भाशयो जरायुस्स्यादुल्बं च कललोऽस्त्रियाम् ॥ १८ ॥
बालस्य नाभिनालायाममरा कालिनाति च ।
सूतिमासो वैजननो जीवतोका तु जीवसूः ॥ १९ ॥
बिन्दुर्नश्यत्प्रसूतिः स्यादशिश्वी शिशुवर्जिता ।
अवीरा निष्पतिसुता किमिला बहुसूतिका ॥ २० ॥
कुटुम्बिनी तु गृहिणी पुरन्ध्री मातृकेति च ।
वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती ॥ २१ ॥
उपाध्यायान्युपाध्यायी शूद्र्यर्यी क्षत्रियीति च ।
आचार्यानी च पुंयोगादर्यार्याण्यौ तु जातितः ॥ २२ ॥
क्षत्रिया क्षत्रियाणी च शूद्रा चेत्यपि जातितः ।
स्यादुपाध्याय्युपाध्यायाप्याचार्या च स्वयंकृता ॥ २३ ॥



पण्यस्त्री गणिका वेश्या वारस्त्री रूपजीवना ।
वारमुख्या सत्कृतासौ दूती संचारिणी समे ॥ २४ ॥
कुट्टिनी शंफली चुन्दी वयस्याली सखी सुहृत् ।
सैरन्ध्री परवेश्मस्था स्वतन्त्रा शिल्पकारिणी ॥ २५ ॥
दासी तु चेटिका चेटा वडबा कुंभधारिका ।
जनयित्री जनन्यंबा माताथ भगिनी स्वसा ॥ २६ ॥
सा ज्येष्ठांबाप्यवन्ती च कनिष्ठा कन्यसांबिका ।
ननान्दा तु स्वसा पत्युः ननन्दा नन्दिनीति च ॥ २७ ॥
पत्न्यास्तु भगिनी ज्येष्ठा ज्येष्ठश्वश्रूः कुलीति च ।
कनिष्ठा स्यालिका हाली पत्रिणी केलिकुंचिका ॥ २८ ॥
बीजी तु जनको वप्ता तातो जनयिता पिता ।
पितामहः पितृपिता तत्पिता प्रपितामहः ॥ २९ ॥
मातुर्मातामहाद्येवं तदूर्ध्वं वृद्धपूर्वकाः ।
दंपत्योर्व्यत्ययान्माता श्वश्रूस्स्यात् श्वशुरः पिता ॥ ३० ॥
सहजस्स्वसरो भ्राता कनिष्ठोऽवरजोऽनुजः ।
पूर्वजस्त्वग्रजो ज्येष्ठः पितृव्यास्सहजाः पितुः ॥ ३१ ॥
ज्येष्ठतातः पितृज्येष्ठः क्षुल्लतातोऽनुजः पितुः ।
स्यालः स्यादनुजः पत्न्याः तस्याः स्यादबलोऽग्रजः ॥ ३२ ॥
देवरो देवृदेवानौ मातुर्भ्राता तु मातुलः ।
दंपत्योरार्जिकोऽन्योन्यो वैमात्रेयो विमातृजः ॥ ३३ ॥
समानोदर्यसोदर्यौ सगर्भस्सोदरस्समाः ।
भार्या जाया सहचरी द्वितीया सहधर्मिणी ॥ ३४ ॥
सधर्मचारिणी पाणिगृहीती पालुषी वधूः ।
पत्नी क्षेत्रं कलत्रं च गृहाः पुंभूम्नि दारवत् ॥ ३५ ॥

जाया प्रजावती भ्रातुर्ज्येष्ठभ्रातुः प्रिया वधूः ।
स्नुषा वधूर्जनी सूनोर्मातुलानी तु मातुली ॥ ३६ ॥
भ्रातृवर्गस्य या भार्या यातरस्ताः परस्परम् ।
रुच्यः प्रियः पतिर्भर्ता सेक्ता वरयिता धवः ॥ ३७ ॥
पतिर्ननान्दुः कौतूलो नशिको भगिनीपतिः ।
जारस्तु स्यादुपपतिर्जामाता दुहितुः पतिः ॥ ३८ ॥
वेश्यापतौ षिद्गकुंभभुजङ्गविटपल्लवाः ।
पुत्रस्तु तनयस्सूनुरात्मजो नन्दनोऽगजः ॥ ३९ ॥
सुतः पोतश्च पुंगर्भे नरो दुहितरि स्त्रियः ।
द्वयोश्च गर्भसन्तानौ प्रसवश्च नरस्सदा ॥ ४० ॥
तोकापत्ये नपुं स्त्री तु प्रसूतिस्सन्ततिः प्रजा ।
जामेयभागिनेयौ तु स्वस्रीयोऽथ पितृष्वसुः ॥ ४१ ॥
पुत्रे पैतृष्वसेयश्च पितृष्वस्रीय इत्यपि ।
एवं मातृष्वसुश्च द्वौ भ्रात्रीयो भ्रातुरात्मजः ॥ ४२ ॥
सौभागिनेयकानीनौ सुभगाकन्ययोस्सुतौ ।
दास्या दासेयदासेरौ पौंश्चलेयोऽसतीसुते ॥ ४३ ॥
बन्धुलबान्धकिनेयौ च कौलटेयश्च कौलटेरश्च ।
साध्वी तु भिक्षुकी चेत् कौलटिनेयश्च कौलटेयश्च ॥ ४४ ॥
पौनर्भवः पुनर्भूज उरस्यस्त्वौरसस्स्वजः ।
नप्तारौ पौत्रदौहित्रौ प्रतिनप्ता प्रपौत्रकः ॥ ४५ ॥
परंपरस्तु तत्पुत्रस्तत्पुत्रोऽपि परंपरः ।
अयं पल्ययनोऽपि स्यात् कल्पनस्तु तदात्मजः ॥ ४६ ॥
सहप्रवाच्यौ भगिनीभ्रातरौ भ्रातराविति ।
मातापितरौ पितरौ मातरपितराविति प्रसूतातौ ॥ ४७ ॥



श्वश्रूश्वशुरौ श्वशुराविति पुत्राविति सुतापुत्रौ ।
जायापती तु मिथुने जंपती दंपती इति ॥ ४८ ॥
पितरस्तु पितुर्वंश्या मातुर्मातामहाः कुले ।
अन्ववायोऽन्वयो वंशस्सन्तानो जननं कुलम् ॥ ४९ ॥
राजबीजी राजवंश्यो बीज्यो वंश्यश्च वंशजः ।
स्युर्ज्ञातयस्सगोत्राश्च सपिण्डास्तु सनाभयः ॥ ५० ॥
स्वजनो बांधवो बन्धुः कुटुंबन्तु सुतादिकम् ।
परिवारः परिजनः परिस्पन्दः परिग्रहः ॥ ५१ ॥
देहोऽस्त्री स्त्री तनुर्गात्रं क्षेत्रमङ्गं कलेबरम् ।
चतुश्शारवं संहननं शरीरं करणं सिनम् ॥ ५२ ॥
बन्धः प्रजानुकः कायो भूघनस्संचरोऽपि च ।
प्राया वयांस्यस्य दशास्तारुण्यं यौवनं वयः ॥ ५३ ॥
ज्यानिर्जीर्णिः स्थाविरं तु पात् स्त्री विस्रंसजा जरा ।
शिशुत्वं शैशवं बाल्यं सामुद्रं देहलक्षणम् ॥ ५४ ॥
गात्राण्यङ्गानि चास्यांशाः प्रतीकापघनावपि ।
अंशस्त्ववयवो भाग एकदेशः कलेति च ॥ ५५ ॥
भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके ।
अस्त्री चरणमंघ्रिर्ना पत् पादः क्रमणं पदम् ॥ ५६ ॥
तद्ग्रन्थी घुटिकौ गुल्फौ प्रपदं चरणाग्रकम् ।
गुल्फशीर्षस्त्विन्द्रवस्तिः कूर्चस्त्वंगुष्ठकान्तरम् ॥ ५७ ॥
पादांगुष्ठांगुलीमध्ये क्षिप्रं क्षेपणमस्त्रियाम् ।
प्रसृता जाघनी जंघा पिण्डिका स्यात् पिचिण्डिका ॥ ५८ ॥
नलतीरं तूरुपर्व जानुरष्ठीवदस्त्रियौ ।
सक्थि क्लीबं पुमान्वोरुरूरुमूलानि वंक्षणाः ॥ ५९ ॥

अंकस्तूपस्थ उत्संगः पीठीवं त्वण्डमूलकम् ।
पायुस्तु ना गुदापाने त्रिवलीकं बुलिश्च्युतिः ॥ ६० ॥
शंकुर्मेढ्रश्शेफकोशौ शिश्नं मेहनशेफसी ।
पुषो भगं कामपदमक्लीं योनिश्च्युतिर्बुलिः ॥ ६१ ॥
उक्तद्वयमुपस्थोऽस्त्री गुह्यप्रजनने नपुम् ।
सीवन्यस्मादधस्सूत्रं गुह्यमध्यं गुडो मणिः ॥ ६२ ॥
धारका गुह्यधारायां पुंफिका गुह्यजे मले ।
अस्त्रियो मुष्ककोशाण्डाः फेलुको वृषणोऽण्डुकः ॥ ६३ ॥
कांचीपदं कलत्रं च कटिश्श्रोणिः ककुद्मती ।
पुरोभागोऽस्य जघनो नितंबोऽपरभागकः ॥ ६४ ॥
ऊरवौ पुंसि कटिप्रोथौ पूलकौ च स्फिचौ स्त्रियौ ।
कुकुंदरे कटीकूपौ कटौ तु कटिशीर्षकौ ॥ ६५ ॥
वंशस्तु पृष्ठमध्यास्थि(मूलभागोऽस्य तु त्रिकम्) ।
मूत्राशयो वस्तिरक्लीं नाभिर्नाभी प्रतारिका ॥ ६६ ॥
कुक्षिको मलुकस्तुन्दं जठरं चोदरं न ना ।
अवलग्नवलग्नौ तु मध्यमो मध्यमस्त्रियाम् ॥ ६७ ॥
हृदयं हृदुरो वक्षस्स्तनो वक्षसिजः कुचः ।
स्तनाग्रे पिप्पलं वृन्तं चूचुकं मेचकं शिखा ॥ ६८ ॥
न क्लीं कक्षा बाहुमूलं पार्श्वमस्त्री तयोरधः ।
पश्चिमांगं तनोः पृष्ठमंससन्धी तु जत्रुणी ॥ ६९ ॥
उलूखलं तु सन्धिः स्यात् कक्षाया वंक्षणस्य च ।
कण्ठेगुडः कण्ठमणिरंसान्तौ पीठबन्धनौ ॥ ७० ॥
स्कन्धो दोश्शिखरोंऽसोऽस्त्री बाहा बाहुभुजौ न षण् ।
दोर्न स्त्री करपोणिर्ना हरणः करणः छवः ॥ ७१ ॥



प्रवेष्टश्च कफोण्यां तु कूर्परः कफणिर्न षण् ।
प्रगण्डः कूर्परादूर्ध्वं प्रकोष्ठः कूर्परादवाक् ॥ ७२ ॥
मणिबन्धो मणिः पाणिमूले पाणौ करश्शयः ।
पंचशाखस्तलो हस्तस्तर्जनी तु प्रदेशिनी ॥ ७३ ॥
अनामिका तु सावित्री कनिष्ठा तु कनीनिका ।
ज्येष्ठा तु मध्यमांगुष्ठस्त्वंगुलोऽथांगुलिस्त्रियाम् ॥ ७४ ॥
करशाखाथ करभो मध्यं मणिकनिष्ठयोः ।
तीर्थानि हस्तावयवा नखरस्तु नखोऽस्त्रियाम् ॥ ७५ ॥
पुनर्भवः पाणिरुहो महाराजः पुनर्नवः ।
खरूलः करजश्चाथ स प्रवृद्धः स्मरांकुशः ॥ ७६ ॥
चपेटश्चर्पटस्तालः प्रहस्तः प्रतलस्तलः ।
षट् ते ततांगुले हस्ते न्युब्जेऽस्मिन् प्रसृतः करे ॥ ७७ ॥
तौ संहतौ संहतलः सोंऽजलिः करभावपि ।
प्रसृते तु द्रवाधारे गण्डूषश्चुलुकश्चुलः ॥ ७८ ॥
पताकः कुंचितांगुष्ठे संश्लिष्टप्रसृतांगुलौ ।
अक्लीबौ मुष्टिमुस्तू द्वौ संग्राहो मुचुटिः स्त्रियाम् ॥ ७९ ॥
घण्टांगुष्ठेन भिन्ना सा खेटकस्त्वर्धमुष्टिकः ।
प्रादेशतालगोकर्णा वितस्तिः स्त्री यथाक्रमम् ॥ ८० ॥
तर्जन्यादिभिरंगुष्ठे वितते विततैस्सह ।
अवटोमनहस्तः स्यात् सप्रकोष्ठं ततांगुलिः ॥ ८१ ॥
दघ्नद्वयसमात्रास्तु जान्वादेस्तत्तदुन्मिते ।
व्यायामो न्यग्रोधो व्यामश्च भुजौ प्रसारितौ तिर्यक् ॥ ८२ ॥
त्रिषु तु परे चत्वारः पौरुषमुद्वाहुपुंमाने ।
गलो निगरणः कण्ठो गरो ग्रीवा तु कन्धरा ॥ ८३ ॥

शिरोधरावसुषिरा शिरोधिर्व्यापलण्डिका ।
कंबुग्रीवा त्रिरेखा सा शिरःपीठः कृकाटिका ॥ ८४ ॥
घाटाप्यवटुरक्लीब उत्तमांगं पुनश्शिरः ।
उष्णीषं शीर्षमक्षत्रं पुंसि मूर्धा च मस्तिकः ॥ ८५ ॥
मुण्डोऽस्त्री मस्तकाऽप्यस्त्री मुखन्तु वदनं घनम् ।
तेरं तुण्डं वक्त्रमास्यमाननं च द्विजालयम् ॥ ८६ ॥
ओष्ठस्याधस्तु चिबुकं चुबुकं चबुकं च तत् ।
अधरस्त्वधरोष्ठः स्यादोष्ठा दन्तच्छदोऽपि च ॥ ८७ ॥
दन्तवस्त्रं च तत्प्रान्तौ सृक्कणी दशनाः पुनः ।
रदनाः खादना दन्ता दंशा मल्ला रदा द्विजाः ॥ ८८ ॥
मध्यदन्ता राजदन्ता दंष्ट्रा तत्पार्श्वयोर्द्वयोः ।
तत्पार्श्वयोस्स्थिता दन्ता जंभास्तालु तु काकुदम् ॥ ८९ ॥
रसज्ञा रसना जिह्वा राजिस्सूनाऽप्यधस्स्थिता ।
गण्डो गल्लः कपोलश्च तत्परा तु हनुर्न षण् ॥ ९० ॥
वक्रो नकुटकं घ्राणं घोणा नासा विघूणिका ।
शिंघाणी नासिका चाथ धमनौ नासिकापुटौ ॥ ९१ ॥
नासाग्रे दृष्टिबन्धोऽथ शिंघाणो नासिकामलः ।
पिण्डूषः कर्णजमलः कर्णश्शब्दग्रहश्श्रवः ॥ ९२ ॥
पैण्डूषोऽस्त्री श्रुतिश्श्रोत्रं श्रोतश्च श्रवणं श्रवः ।
पालिस्तु कर्णलतिका वेष्टनं कर्णशष्कुली ॥ ९३ ॥
ईक्षणं नयनं चक्षुरक्षि लोचनमंबकम् ।
दृष्टिर्दृक् चाथ न पुमांस्तारकाक्ष्णः कनीनिका ॥ ९४ ॥
वल्गु पक्ष्म च दृग्लोम्नि दृक्छदो वर्त्मवर्त्मनी ।
बिडालको नेत्रपिण्डो दूषिका त्वक्षिजं मलम् ॥ ९५ ॥



ललाटमलिकं गोधिस्स्त्री तत्प्रान्तौ तु शंखकौ ।
भ्रूर्झिल्लिकाथ शिरसः पृष्ठे नापितकोलिका ॥ ९६ ॥
जटुले कालकः पिप्लुस्तिलके तिलकालकः ।
तनूरुहं रोम लोम केशाश्शिरसिजाः कचाः ॥ ९७ ॥
वालाः कंजास्तीर्थवाहाः कुन्तलाश्च शिरोरुहाः ।
कुंचितास्ते कर्कराला बर्बरा अलका अपि ॥ ९८ ॥
ते ललाटे भ्रमरकाः कुरुला भ्रमरालकाः ।
पर्पर्यां स्याद्वल्लरीका झल्लर्यां झंपटिः क्षुवः ॥ ९९ ॥
केशकूटस्तु धंमिल्लः कबरी कर्परी समे ।
चोचुस्तु वालकूर्चालस्सीमन्तः केशपद्धतिः ॥ १०० ॥
तद्ग्रन्थिस्सन्धितोऽथ प्ता जालिनी गरुडा जटा ।
प्रलोभ्यं तु शिरस्यं च शीर्षण्यं चामलाः कलाः ॥ १०१ ॥
चूडा केशी केशपाशी शिखण्डी कमुजा शिखा ।
बालानां सा काकपक्षशिखण्डश्च शिखण्डकः ॥ १०२ ॥
श्मश्रु तु व्यंजनं चोटस्समे शिंघाणशिंगिनी ।
त्वक् स्त्री छदिस्तनुः कृत्तिस्संछादन्यप्यसृग्धरा ॥ १०३ ॥
रसस्तु घनधातुस्स्यादात्रेयषड्रसासवः ।
मूलधातुर्वह्निसुतो महाधातुरसृक्करः ॥ १०४ ॥
रुधिरं लोहितं रक्तमस्त्रं क्षतजमासुरम् ।
रोक्यं शोध्यं मांसकरं रसतेजो रसोद्भवम् ॥ १०५ ॥
आग्नेयं प्राणदं विस्त्रं वासिष्ठं शोणितासृजी ।
मांसं तु काश्यपं क्रव्यं तरसं पललं पलम् ॥ १०६ ॥
रक्ततेजो रक्तभवं पिशितं कीनमामिषम् ।
मेदस्करं च मेदस्तु पलतेजः पलोद्भवम् ॥ १०७ ॥

विस्त्रमस्थिकरं स्नेहवरं गौतममित्यपि ।
अथास्थि कीकसं विङ्कं कललं क्रूरमाढिकम् ॥ १०८ ॥
कुल्यं मेदोभवं मेदस्तेजो मज्जाकरं बलम् ।
भारद्वाजं श्वदयितं सारसंघातकर्करा: ॥ १०९ ॥
मज्जा स्त्री कौशिकं सूक्ष्ममस्थितेजोऽस्थिसंभवम् ।
अस्थिस्नेहो वीर्यकरो मज्जतेजस्विनौ बली ॥ ११० ॥
रेतो बीजं वरं वीर्यं हर्षजं स्नेहु पौरुषम् ।
शुक्लं प्रधानधातुश्च धातवोऽमी नवाष्ट वा ॥ १११ ॥
तिलकं क्लोम गोर्दं तु मस्तिष्को मस्तुलुङ्गकः ।
पेशिर्मांसलताथ द्वौ वृक्यौ पार्श्वगतौ गुडौ ॥ ११२ ॥
अस्त्री परीतदान्त्वं स्यात् कालखण्डं पुनर्यकृत् ।
गुल्मः प्लीहा च डिंबस्स्यादष्ठीला गर्भसंपुटः ॥ ११३ ॥
अग्रमांसं तु हृदयं हृद्रसा त्वामिषो रसः ।
कङ्कालोऽस्त्री तनोरस्थि करङ्कोऽप्यस्थिपञ्जरम् ॥ ११४ ॥
पार्श्वस्य वंक्रिः पर्श्वस्त्री पृष्ठस्यास्थि कशेर्वना ।
कर्परो ना करोटिः स्त्री कपालोऽस्त्री शिरोऽस्थनि ॥ ११५ ॥
शाखास्थि नलकञ्जानोरष्ठी स्यात्कूर्परस्य च ।
धमनी त्वीलिका नाली सिरा दोषप्रणालिका ॥ ११६ ॥
ग्रीवायास्तु सिरा मन्या महास्नायुस्तु कन्धरा ।
नखारुस्तु स्नसा स्नावः स्नाय्वना सन्धिबन्धनम् ॥ ११७ ॥
लसीका लसिका रक्तरसमांसविपाकजाः ।
पूयं तु कुणपं दूष्यं पुरीषं शमलं शकृत् ॥ ११८ ॥
उच्चारो विण्न ना गूथो वर्चस्को मलमस्त्रियाम् ।
विष्ठा चाप्यथ लण्डोऽस्त्री विष्ठा राजियुता दृढा ॥ ११९ ॥



प्रस्रावो देहवारि स्यान्मूत्रमेकाङ्गुलं च तत् ।
सृणिका स्यन्दिनी लाला मलं किट्टं च न स्त्रियाम् ॥ १२० ॥
पित्तं मायुर्नरि श्लेष्मा बलासः खेटकः कफः ।
क्षुत् स्त्री क्षुतः क्षवः पुंसि प्रतिश्यायस्तु पीनसः ॥ १२१ ॥
दवथुः परितापः स्यात् ग्लानिः स्त्री ग्लवथुः पुमान् ।
शोफोऽस्त्री श्वयथुश्शोथः पादस्फोटो विपादिका ॥ १२२ ॥
स्फोटकः कीलको गण्डो विस्फोटः पिटका त्रयी ।
खसः पुमान् स्त्रियः कच्छूपामपामाविचर्चिकाः ॥ १२३ ॥
कण्डूकण्डूतिकण्डूयाः खर्जूः कण्डूयने स्त्रियः ।
यक्ष्मा यक्ष्मः क्षयश्शोषः कोठः कुष्ठं च मण्डलम् ॥ १२४ ॥
श्वित्रं श्वेतेऽत्र चक्रं तु दद्रुः स्त्री मुखजः पुनः ।
पुंहलोऽपि वरण्डोऽपि व्यंगो नीलं पृषन्मुखे ॥ १२५ ॥
मंकुस्तु सिद्ध्म सिध्मं च केशघ्नं त्विन्द्रलुप्तकम् ।
उद्गालो वमथूद्गारौ वान्तिः प्रच्छर्दिका वमिः ॥ १२६ ॥
झिणिका वातसंचारो हिक्का हेक्का च हिक्किका ।
उच्छ्वासरोधो योऽकस्मात् क्राथोऽसौ क्रथनं क्षणम् ॥ १२७ ॥
अश्मरी मूत्रकृच्छ्रं स्यात् प्रमेहस्त्वतिमूत्रतः ।
आनाहो मलविष्टंभ उत्थानं तु मलस्रुतिः ॥ १२८ ॥
नातिभिन्नस्त्वतीसारो ग्रहणी स्त्री प्रवाहिका ।
गलगण्डो गण्डमालो रोहणी तु गलांकुरः ॥ १२९ ॥
गुल्मः स्यादुदरग्रन्थिस्सीवनीजो भगन्दरः ।
शंबूकावर्त एष स्यात्त्रिदोषोत्थोऽथ पित्तजः ॥ १३० ॥
स्यादुष्ट्रग्रीवकोऽथ स्त्री परिस्रावी कफोद्भवः ।
अर्शो दुर्नाम वृद्धिस्तु कुरण्डश्चाण्डवर्द्धने ॥ १३१ ॥

उपदंशो लिंगशोफ उदावर्त्तो गुदग्रहः ।
नेत्ररुक्कामला क्लीबं कुंभः स्यात्सा महत्तरा ॥ १३२ ॥
श्लीपदः पदवल्मीको गतिर्नाडीव्रणः पुमान् ।
अर्बुदो मांसकीलः स्यात्पृष्ठग्रन्थिर्गुडो गडुः ॥ १३३ ॥
सुप्तः कुक्कुट एकांगग्रहश्च वरुणग्रहः ।
गजे ज्वरस्य नामानि सिंहे तोये च सोऽण्डिकः ॥ १३४ ॥
उष्ट्रे लसोऽभितापोऽश्वे व्याघ्रे पोतो गवीश्वरः ।
बिडाले क्वणकः पोत्रिण्यलसश्छर्दनश्शुचिः ॥ १३५ ॥
क्रमाद्धारिद्रेन्द्रमदौ मृगरोगौ पपा ततः ।
महिषे मत्स्यमृगयोः खगे चाक्षेपकोऽनिले ॥ १३६ ॥
धरण्यां करकोत्पाटावुद्भिज्जे पाण्डुवर्णकः ।
मारिर्मसूरी रुग्भेदाश्शूलाद्या विद्रधिर्न षण् ॥ १३७ ॥
व्याधिव्याप्यामया माथरोगामा देहमर्दनः ।
संतापोऽपाटवं मान्द्यमाकुल्यं रुग्रुजे स्त्रियौ ॥ १३८ ॥
उपचर्या चिकित्सा स्याल्लंघनं त्वपतर्पणम् ।
कुशी भग्नास्थिबन्धस्स्यादरिष्टो दंशबन्धनम् ॥ १३९ ॥
पट्टस्तु व्रणबन्धस्स्यान्नस्यं नस्तं च नावनम् ।
अङ्गुल्यग्रेण चूर्णाद्यैर्घर्षणं प्रतिसारणम् ॥ १४० ॥
जायुः पुंस्यगदस्तन्त्वं भैषज्यौषधभेषजम् ।
क्वाथः कषायो निर्यूहः फाण्टोऽतिक्वाथजो रसः ॥ १४१ ॥
क्वाथादेस्तु पुनः क्वाथात् घनीभावो रसक्रिया ।
वार्त्तं पाटवमारोग्यं संग्यं स्वास्थ्यमनामयम् ॥ १४२ ॥
त्रिष्वतः पटुरुल्लाघो वार्तः कल्यो निरामयः ।
रोगहार्यगदंकारो भिषग्वैद्यश्चिकित्सकः ॥ १४३ ॥



निदानज्ञस्तु दोषज्ञ आयुर्वेदी तु शास्त्रवित् ।
आतुरोऽभ्यमितोऽभ्यान्तो विकृतो व्याधितोऽपटुः ॥ १४४ ॥
आमयावी समौ ग्लास्नुग्लानौ पामनकच्छुरौ ।
वातार्शोदद्रुमन्तस्स्युर्वातलार्शसदद्रुणाः ॥ १४५ ॥
श्लेष्मसूः श्लेष्मलः खेटी सातिसारोऽतिसारकी ।
किलासी सिध्मलो वृद्धनाभौ तुण्डिभतुण्डिलौ ॥ १४६ ॥
खल्वाटः खलतिर्बभ्रुशिपिविष्टैन्द्रलुप्तिकौ ।

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
पातालकाण्डे भूताध्यायः)

---

(पातालकाण्डस्समाप्तः)

---

## अथ सामान्यकाण्डः

### गणाध्यायः

पूगप्रकरसंघातविसरव्रातसंचयाः ।
वारस्कन्धगणस्तोमसमवायचयव्रजाः ॥ १ ॥
सन्दोहनिवहव्यूहसमूहनिकराकराः ।
समुदायस्समुदयो निकुरुंबं कदम्बकम् ॥ २ ॥
बृन्दं जातं चक्रवालं जालकं पेटकं जटा ।
धान्यादिबृन्दे कूटोऽस्त्री राशिपुंजोत्करा नरि ॥ ३ ॥
बृन्दे तिरश्चां यूथोऽस्त्री निकायस्तु सधर्मणाम् ।
संघसार्थौ तु जन्तूनां वर्गस्तु सदृशां गणे ॥ ४ ॥
पशूनां समजोऽन्येषां समाजो धीमतां सभा ।
उद्भिज्जानां तु षण्डोऽस्त्री स्कन्धोऽश्वनरहस्तिनाम् ॥ ५ ॥
पटल्यपुं सुश्लिष्टानां सजातीयगणे कुलम् ।
शौककापोतशाबाद्याश्शुकादीनां गणे नपुम् ॥ ६ ॥
स्त्री गोत्रप्रत्ययान्तेभ्यस्स्यादौपगवकादिकम् ।
माणवानां तु माणव्यं बाडब्यं तु द्विजन्मनाम् ॥ ७ ॥
राजन्यकं मानुष्यकं राजकं च पृथक् पृथक् ।
गार्भिणं यौवनं तासां गाणिक्यं गणिकागणे ॥ ८ ॥
जनबन्धुगजग्रामसहायानां गणे स्त्रियः ।
जनताबन्धुतेत्याद्या बाडबं बडबागणे ॥ ९ ॥
हास्तिकमौष्ट्रकमौक्षकमौरभ्रकमाजकं गजादीनाम् ।
एवं धैनुकवात्सकमाश्वीयं त्वाश्वमश्वानाम् ॥ १० ॥
सवर्मणां कावचिकं पादातं पादचारिणाम् ।



आपूपिकं शाष्कुलिकमित्यादिकमचेतसाम् ॥ ११ ॥
कैदारिकं तु कैदार्यं क्षैत्रं कैदारकं समम् ।
केशानां कैशिकं कैश्यं खल्या तु खलिनी समे ॥ १२ ॥
भैक्षसाहस्रकारीषवार्मणानि च तद्गणे ।
रथकड्या तु रथ्या स्याद् गोत्रा गव्या च गोगणे ॥ १३ ॥
धूम्या वात्या पाश्या हल्या गल्या नल्या वन्या तृण्या ।
पृष्ठ्यं तत्तद्बृन्दे सर्वं पार्श्वं बृन्दे पर्शूनां स्यात् ॥ १४ ॥
मिथुनं द्वितयं द्वैतं द्वयं द्वंद्वं युगं यमम् ।
यमलं युगलं युग्मं युतकं च द्वयोर्गणे ॥ १५ ॥
त्रयं त्रयाणां त्रितयं मिथुनं तद्वति त्रिषु ।
स्त्रीपुंसयोस्तु मिथुनं कशिपुः स्त्र्यन्नवस्त्रयोः ॥ १६ ॥
औशीरं शय्यासनयोर्लिंगं बुद्ध्यादिसंगतौ ।
ग्रामः परोऽस्त्राद्विषयात् (गुणाद्) भूतेन्द्रियार्थकात् ॥ १७ ॥
पक्षः पाशश्च हस्तश्च केशार्थेभ्यः परो गणे ।
पशूनां गोयुगं युग्मे तत्तदाह्वयपूर्वकम् ॥ १८ ॥
गणपूरणं गणतिथं पूगतिथं चैवमेव संघतिथम् ।
बहुतिथसंवत्सरतममासतमान्यर्धमासतमम् ॥ १९ ॥
यावतिथैतावतिथे तावतिथं कतिथमपि च कतिपयथम् ।
पंचमसप्तमनवमान्यष्टमदशमद्वितीयानि ॥ २० ॥
षष्ठं प्रथमतृतीये तुरीयतुर्ये चतुर्थं च ।
द्वादशमेकादशमिति रूपं स्याद्विंशतेरर्वाक् ॥ २१ ॥
विंशं विंशतितममेकविंशमितिवत्परं द्विधा सर्वम् ।
षष्टितममितिवदेकं रूपमसंख्यादिषष्ट्यादेः ॥ २२ ॥
शततममेकशततमं सहस्रतममिति च सर्वमेकविधम् ।

ओजमयुग्मं युग्मं युगिति द्वितीयतुर्यादि ॥ २३ ॥
त्रिष्वेते पूरणार्थास्स्युश्शब्दा गणतिथादयः ।
आवलिः पद्धतिः पङ्क्तिरालिर्लेखा च मालिका ॥ २४ ॥
एकादयश्च संख्येये शब्दाः प्राग्विंशतेस्त्रिषु ।
द्वित्रा द्वौ वा त्रयो वा स्युरेवं त्रिचतुरा अपि ॥ २५ ॥
चतुःपंचाः पंचषाश्च षट्सप्ताद्याश्च तादृशाः ।
स्त्री पङ्क्तिर्विंशतिस्त्रिंशच्चत्वारिंशच्च पंचाशत् ॥ २६ ॥
षष्टिस्सप्तत्यशीतिश्च नवतिश्च दशोत्तराः ।
क्रमेणाथ परेणाथ परे दशगुणोत्तराः ॥ २७ ॥
शतं सहस्रमयुतं नियुतं प्रयुतार्बुदे ।
न्यर्बुदं बृन्दखर्वे च निखर्वं शंखमंबुजम् ॥ २८ ॥
समुद्रो मध्यमन्तं च परार्धं च यथाक्रमम् ।
परं परार्धाद्विगुणमथ स्त्री कोटिरर्बुदे ॥ २९ ॥
व्यत्यासेन तु दृश्येते नियुतप्रयुते क्वचित् ।
बृन्दादिषु तु षट्स्वन्ये निखर्वं बद्धमक्षितम् ॥ ३० ॥
व्योम चांतश्च सर्वश्च समुद्राद्यास्तु वा त्रिषु ।
अन्ये त्वाहुश्शतं कोटिश्शंकुर्बृन्दं महागणः ॥ ३१ ॥
पद्मं महांबुजं चेति क्रमाल्लक्षगुणोत्तरम् ।
सहस्राणां शते लक्षा लक्षं च नियुतं च तत् ॥ ३२ ॥
पङ्क्त्यादयस्स्युरसंख्यायां संख्येयेषु च वस्तुषु ।
संख्यायां द्व्येकबहुतास्संख्येयेषु सदैकता ॥ ३३ ॥
तद्यथा विंशतिर्गावस्स्याद्वृत्तौ जातु नैकता ।
तद्यथा विंशतिर्विप्रास्तिस्रो विंशतयो भटाः ॥ ३४ ॥
बहुव्रीहौ बहुवचो वाच्यलिंगं च तद्यथा ।



उपविंशैर्भुजैर्भुक्तमुपत्रिंशा अजा इति ॥ ३५ ॥
कला गणनसंख्याने हननं ताडनं समे ।
वर्गस्तावत्कृतिश्चेति तावत्कृत्वः कृतेर्द्वयम् ॥ ३६ ॥
तन्मूले तु पुमान्हेतुर्गच्छा वांछितराशयः ।
गंडः कपर्दाश्चत्वारस्ते बोध्री पंच तद्द्वयम् ॥ ३७ ॥
बिन्दुकोऽस्त्री तद्द्वये तु पणपाणिकपादिकाः ।
क्रमात्ततोऽगजो रुच्यः कार्षिकश्च चतुर्गुणाः ॥ ३८ ॥
कार्षापणः कार्षिकस्स्यात् स षोडशपणः क्वचित् ।
लोहे विंशतिमाषोऽसौ कार्षिके ताम्रिके पणः ॥ ३९ ॥
ताम्रकर्षकृता मुद्रा क्वचित्कार्षापणः पणः ।
स एव चाधिकेत्युक्तो धानका तच्चतुष्टयम् ॥ ४० ॥
ता द्वादश सुवर्णोऽस्त्री निष्को दीनार इत्यपि ।
साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ॥ ४१ ॥
त्रसरेणुभिरष्टाभिर्लिक्षा सैव मरीचिका ।
रथरेणुश्च रेणुश्च तास्तिस्रो राजसर्षपः ॥ ४२ ॥
धुरणश्च यवाग्रश्च ते त्रयो गौरसर्षपः ।
तेऽष्टौ यवष्षोडश तु यवा माषोऽथवा त्रिभिः ॥ ४३ ॥
यवैर्गुंजा पंच गुंजा माषः कुप्ये तु सप्त ताः ।
रूप्यमाषो द्विगुंजो वा धरणं षोडशैव ते ॥ ४४ ॥
शतमानं तु दशभिर्धरणैः पलमेव च ।
माषस्तण्डुलमात्रो वा हेम्नस्तैरष्टभिः पणः ॥ ४५ ॥
निष्कोऽस्त्री विंशतिपणस्तेऽष्ट वा दश वा पलम् ।
यः पंचकृष्णलो माषः कुप्ये वा सप्तकृष्णलः ॥ ४६ ॥
तौ द्वौ माषावर्णिका स्याल्लोहितीकं त्रिमाषकम् ।

शाणो मण्डः पिचूलं च माषास्स्युश्चतुरादयः ॥ ४७ ॥
मक्षुणं सप्तमाषं स्यादण्डिका स्याच्चतुर्यवा ।
द्रक्षणं द्रक्षुमं कोलं वटकं चाष्टमाषके ॥ ४८ ॥
तृतीये ध्वानका शाणभागे माषास्तु षोडश ।
सुवर्णोऽक्षः पिचुः पाणिः कर्षोऽस्त्री क्रोडबिंदुके ॥ ४९ ॥
बिडालपादकं हंसपदं ग्रासग्रहं तलम् ।
शतमानं तु कर्षे द्वे शुक्तिरष्टमिका न ना ॥ ५० ॥
ते द्वे चतुर्थिका वा स्त्री निकुंच्याज्यपलानि च ।
बिल्वः प्रकुंचं मुष्टिश्च हेम्नोऽक्षे विस्तवारटौ ॥ ५१ ॥
पादिकं ताम्रकर्षं स्यादिन्दुस्स्याद्रजते पले ।
कुरुविस्तः पले हेम्नः प्रसृतोऽस्त्री द्विमुष्टिके ॥ ५२ ॥
प्रसृतौ द्वावंजलिः स्यात् कुडपो वाहिकोऽध्युषः ।
तौ द्वौ मान्यष्टमानं च ते द्वे प्रस्थस्स कुप्यके ॥ ५३ ॥
द्वात्रिंशत्पलकोऽन्येषां द्वादशैव पलानि सः ।
चतुष्प्रस्थः पुना राशिर्महोद्रेको बृहाणकः ॥ ५४ ॥
पात्रं शूर्पावरं पिष्टं सेहिका द्व्याढकोऽस्त्रियाम् ।
कंसं चाथ चतुष्के स्युर्द्रोणोऽस्त्री कलशो घटः ॥ ५५ ॥
अर्मणं नल्वलं शौर्पमुन्मानं तद्द्वयं पुनः ।
कुंभश्शूर्पोऽस्त्रियां तौ द्वौ गोणी वाहस्तु तद्द्वयम् ॥ ५६ ॥
तौ द्वौ खारी परे त्वेनां विदुः कुंभीं परे पुनः ।
खारीं कंसयुगेनान्ये मानीं वाहं परे विदुः ॥ ५७ ॥
वाहं केचिच्चतुःखारीं खारीभागं च गोणिकाम् ।
वाहं प्रस्थद्वयं केचित् कुंभानां विंशतिर्जटी ॥ ५८ ॥
दश कुम्भाः पांचमिकः कुंभोऽयमिति के चन ।



धारणं तु पलान्यष्टौ हेम्नस्ताम्रस्य सप्ततिः ॥ ५९ ॥
दशान्येषां शतं मानं सार्धं रूप्यपलैस्त्रिभिः ।
तुला पलशतं तास्तु दशार्क्षं घटिकोऽस्त्रियाम् ॥ ६० ॥
तौ तु द्वौ शाकटो भारश्शाकटीनश्शलाटवत् ।
भारा दश समं संगं धारभारं च शाकटम् ॥ ६१ ॥
आचितं द्व्याचितं होढं हेलकं समकं समम् ।
वाहितं भारितं चाष्टाद्रक्षाद्दशगुणाः क्रमात् ॥ ६२ ॥
माषश्शाणस्तलं मुष्टिरंजलिः प्रस्थ आढकः ।
द्रोणो गोणी च खारी च क्रमादेतच्चतुर्गुणम् ॥ ६३ ॥
पाय्यं हस्तादिभिर्मानं द्रवयं कुडबादिभिः ।
पौतवं तुलया तस्य सूत्रं स्याद्रागसूत्रकम् ॥ ६४ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
सामान्यकाण्डे गणाध्यायः)

---

धर्मकर्माध्यायः

रूपं तत्त्वं सतत्त्वं च स्वरूपं च सलक्षणम् ।
सहजं निजमाजानं धर्मसर्गौ निसर्गवत् ॥ १ ॥
स्वभावः प्रकृती रीतिरवस्था तु दशा स्थितिः ।
प्रभावः प्रभवन्ती स्यात् प्रभुता प्रभविष्णुता ॥ २ ॥
परभागो गुणोत्कर्षः प्राग्भारोऽतिशयो भरः ।
विस्तारो विग्रहो व्यासस्स तु शब्दस्य विस्तरः ॥ ३ ॥
अनायासार्थकं फाण्टं दौर्मत्यं तु करैरकम् ।
विघ्नोऽन्तरायः प्रत्यूहो रोषे त्वादीनवाश्रवौ ॥ ४ ॥
दैर्घ्यमायाम आनाहः परिणाहो विशालता ।
वैपरीत्यं विपर्यासो व्यत्ययश्च विपर्ययः ॥ ५ ॥
व्यत्यासो व्यतिहारः स्यादन्तर्गडु निरर्थकम् ।
तत्क्षणं स्यादेकपदं यदृच्छा नियमोज्झितिः ॥ ६ ॥
वण्टो विभागो भागोंऽशः पादस्त्वंशश्चतुर्थकः ।
कला तु षोडशो भागो वारस्त्ववसरः क्षणः ॥ ७ ॥
प्रतिकूलानुकूलार्थे अपष्ठुरमपष्ठु च ।
पृष्ठमांसादनं पश्चाद्गतस्यार्थस्य गर्हणम् ॥ ८ ॥
आम्रेडनं झटप्पः स्यात् झंपस्संपातपाटवम् ।
कर्म क्रियाप्यनुष्ठानं तद्भेदा गमनादयः ॥ ९ ॥
यात्रा व्रज्या च गमनं प्रस्थानं च गतिर्गमः ।
चक्रावर्तो भ्रमो भ्रांतिर्भ्रमिर्घूर्णिश्च घूर्णनम् ॥ १० ॥
ईहनं शीघ्रगमनं सारणं छद्मना गतिः ।
व्रज्याटाट्या पर्यटनमल्पेऽध्वनि गतागतम् ॥ ११ ॥



सविकारा गतिस्सोरो भेलनं तरणं प्लवः ।
कादाचित्कस्तु भेयोऽसौ क्षेपो लंगनलंघने ॥ १२ ॥
निर्याणं स्यान्निर्गमनमंहनं वक्षसा गतिः ।
प्रतिबन्धः प्रतिष्टंभस्सम्बन्धः प्राप्तिरापनम् ॥ १३ ॥
निर्बन्धोऽभिनिवेशः स्यात् प्रवेशोऽन्तरगाहनम् ।
आस्यासनोपवेशश्च निवेशो रचना स्थितिः ॥ १४ ॥
अथाभ्यादानमारंभः प्रक्रमस्स्यादुपक्रमः ।
प्रत्युत्क्रमः प्रयोगः स्यादारोहणमभिक्रमः ॥ १५ ॥
आक्रमोऽभिक्रमः क्रान्तिर्व्युत्क्रमस्तूत्क्रमो मृतम् ।
विक्रमश्शौर्यकरणमत्याधानमतिक्रमः ॥ १६ ॥
भूमानं विक्रमः पद्भ्यां निर्हारोऽभ्यवकर्षणम् ।
अनुहारोऽनुकारः स्यात् परिहारो निवर्तना ॥ १७ ॥
प्रत्याहार उपादानमभिहारस्त्वभिग्रहः ।
समास उपसंहारस्समाहारस्समुच्चयः ॥ १८ ॥
अपहारस्त्वपादानं प्रहारस्त्वभिताडनम् ।
उपलंभस्त्वनुभवो विलंभस्त्वतिसर्जनम् ॥ १९ ॥
विप्रलंभो विसंवादः प्रतिलंभस्तु लंभनम् ।
स्वतंत्रवृत्तिर्व्युत्थानमभ्युत्थानं तु गौरवम् ॥ २० ॥
संस्थानं सन्निवेशः स्यादुपस्थानं तु संगतिः ।
धान्योत्क्षेपणमुत्कारः पराकारस्तु धिक्क्रिया ॥ २१ ॥
विकारो विप्रकारः स्यादाकारस्त्विंग इंगितम् ।
उपक्रियोपकारः स्यादपकारोऽन्यतः कृतिः ॥ २२ ॥
प्रकार इत्थंभावः स्यादपकारोऽन्यपीडनम् ।
प्रत्याख्यानं निराकारः प्रत्यादेशो निरासवत् ॥ २३ ॥

परिणामोऽन्यथाभावस्सन्नामस्त्वन्यथाकृतिः ।
प्रणामः प्रणिपातः स्यादुन्नामस्तुंगतोन्नतिः ॥ २४ ॥
उद्योगोऽस्त्री समुत्थानं विनियोगोऽर्पणं फले ।
विधिर्नियोगस्संप्रेष उपयोगः फलक्रिया ॥ २५ ॥
संयोगसंप्रयोगौ संभेदस्सन्निपातसंश्लेषौ ।
संपाते विश्लेषे तु विप्रयोगविरहवियोगाः ॥ २६ ॥
विगमोऽपगमोऽपायो मेलने संगसंगमौ ।
शमथस्तु शमश्शान्तिर्दान्तिस्तु दमथो दमः ॥ २७ ॥
बंधनं प्रसितिर्बंधः क्लान्तिस्तु क्लमथः क्लमः ।
परिसर्या परीसारः परिसर्पः परिक्रमः ॥ २८ ॥
लवे विलावो लवनं तेमः स्तेमस्समुन्दनम् ।
प्रतिश्रवः प्रतिख्यातिरपेक्षा प्रतिजागरः ॥ २९ ॥
संयामसंयमौ यामो वियामो वियमो यमः ।
संवाहनं मर्दनं स्यात् पर्यवस्था विरोधनम् ॥ ३० ॥
संस्तवः स्यात्परिचय उदजः प्रेषणे पशोः ।
पवनं पवनिष्पावौ जूतिस्तु जवनं जवः ॥ ३१ ॥
प्रेजनं स्यादपसरो रंधनं पचनं पचा ।
क्षयः क्षिया नयो नायो मदो मादः स्नवः स्रवः ॥ ३२ ॥
उद्वेग उद्भ्रमः श्रायः श्रयणं प्रमितिः प्रमा ।
स्फातिस्तु वृद्धिः स्फुरणं स्फुलनं क्षेपणं क्षिपा ॥ ३३ ॥
उद्यमो गुरणं श्च्योतिः प्रघारः प्रथनं प्रथा ।
भंगिस्तु व्याकृतिः खेदो निर्वेदो घटना घटा ॥ ३४ ॥
यत्प्रेषणं समाहूय तस्मिन् स्यात् प्रतिशासनम् ।
वंचनं त्वतिसंधानं व्यलीकं च प्रतारणम् ॥ ३५ ॥



निष्ठीवोऽस्त्री निष्ठीवनमपि निष्ठेवनं च निष्ठ्यूतिः ।
उपरत्यारत्यपरतिविरतय उपरमण उपरामः ॥ ३६ ॥
संविदागूः प्रतिज्ञास्थाप्यभ्युपायः प्रतिश्रवः ।
अंगीकाराभ्युपगमनियमाश्रवसंश्रवाः ॥ ३७ ॥
प्रणीतिः स्यादनुनयः प्रश्रयस्सांत्वनं तथा ।
सपत्राकृतिनिष्पत्राकृती त्वत्यन्तपीडने ॥ ३८ ॥
वर्णनं स्याद्विभजनं प्रवाहस्तु परंपरा ।
श्रन्थनं ग्रन्थनं गुंफस्संदर्भो रचना न ना ॥ ३९ ॥
विधूननं विधुवनं त्यागो हानं च वर्जनम् ।
आवर्जनं द्रवक्षेपे निधानं क्षेपणासने ॥ ४० ॥
संमूर्छनं व्यापनं स्यात् विदरस्स्फुटनं भिदा ।
आवर्तनं क्राथनं स्यात् क्वथनं पाकवर्तनम् ॥ ४१ ॥
संवीक्षणं विचयनं लोटनं तु विवेष्टनम् ।
इत्यादयः क्रियाशब्दा लक्ष्या धातुषु लक्षणैः ॥ ४२ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
सामान्यकाण्डे धर्मकर्माध्यायः)

---

गुणाध्यायः

गुणो जसुर्द्रव्यपदो द्वौ स्नेहे मार्जमार्जनौ ।
मसृणत्वे तु मारुंगक्रासनौ द्रवणे द्रुतिः ॥ १ ॥
खादीनां तु गुणाश्शब्दस्स्पर्शो रूपं रसः क्रमात् ।
गंधश्चेतीन्द्रियार्थास्ते विषया गोचराश्च ते ॥ २ ॥
सत्यं तथ्यमृतं सम्यक् समीचीनं तथार्थवाक् ।
कर्कशे परुषो रूक्षो मठरः खोरणः खरः ॥ ३ ॥
उत्क्षुद्रलोऽथ मसृणे श्लक्ष्णसोमालचिक्कणाः ।
पिच्छिले स्याद्विजविलः कठिने खरटः खटः ॥ ४ ॥
कठोरनिष्ठुरक्रूरदृढदारुणकक्खटाः ।
खरश्च सुकुमारे तु कोमलो मृदुलो मृदुः ॥ ५ ॥
शीतले शीकरः शीतस्सुषिकस्सुषिमो जडः ।
समीकस्सोलिकस्सोलस्स्कन्दोलो मेकलस्तलः ॥ ६ ॥
तुषारश्शिशिरस्स्फीतस्सेभ्यस्सीमो हिमोऽपि च ।
उष्णं ज्वलः खरः क्रूरो बालस्तिग्मः कृशश्चुपः ॥ ७ ॥
सोमलोऽवह्निको व्यक्तस्तालको जलशीनकः ।
अङ्गारो दहनस्तप्तः प्रुष्वो धूम्रः प्रतापनः ॥ ८ ॥
तीक्ष्णश्चण्डोल्बणप्रोन्द्रकरालिविकरालिनः ।
मन्दोष्णमोष्णं कोष्णश्च कवोष्णश्च कदुष्णवत् ॥ ९ ॥
शुक्ले शुभ्रशुचिश्वेताः पुण्ड्रको धवलोऽर्जुनः ।
अवदातस्सितो गौरो विशदश्येतपाण्डराः ॥ १० ॥
काले कृष्णासितश्यामनीलश्यामलमेचकाः ।
रोहिते लोहितो रक्तो हारिद्रे पीतपीतले ॥ ११ ॥



उत्पिशस्तु सितश्यामे हरिणे पाण्डुपाण्डरौ ।
कपोतस्तु कपोताभः पद्मः पीतसितासितः ॥ १२ ॥
पिंजो नीलसितश्यामस्सोवालः कृष्णधूमलः ।
सितकाचस्तु पिंगाणः कण्डारस्सितकाचरः ॥ १३ ॥
वरालस्सितपिंगाणः स्तोकपाण्डुस्तु धूसरः ।
कोसलः पाण्डुलः श्यामश्चाटः कृष्णहरिस्सितः ॥ १४ ॥
वलक्षस्तु सितश्यामस्सैराभः श्वेतपीतलः ।
सितपीतहरिन्नीलस्तरलो वृद्धपत्रवत् ॥ १५ ॥
रक्तपीतासितश्येते बोलः कारीषभस्मवत् ।
उत्पिशाद्यास्त्वमी मिश्रवर्णाश्शुक्लप्रधानकाः ॥ १६ ॥
शोणोऽरुणश्च संध्याभः श्वेतरक्तस्तु पाटलः ।
मरालोऽल्पः पीतरक्तः पीतरक्तस्तु पिंजरः ॥ १७ ॥
बभ्रुः कडारः कपिलो विदग्धो दुष्टरक्तवत् ।
श्यावे तु कपिशः पिंगे पिशंगः कद्रुपिंगलौ ॥ १८ ॥
नीलपीतारुणश्शारो जोणालो नीललोहितः ।
इति लोहितवर्गीणा अथ पीतप्रधानकाः ॥ १९ ॥
सेरालोऽल्पसितः पीतः पेरालः पीतधूमलः ।
पीतश्यामल ओरालो गौरः स्यात्पीतलोहितः ॥ २० ॥
कीनाशः पीतहरितो हरितो नीलपीतलः ।
कृष्णवर्ग्याः पुनर्धूम्रधूमलौ कृष्णलोहिते ॥ २१ ॥
पीतकृष्णहरिद्राभः काचरः कृष्णधूमलः ।
कृष्णपीतस्तु काचोऽथ पालाशो हरितो हरित् ॥ २२ ॥
तारावतारकिर्मीरशबलैतास्तु चित्रके ।
स चान्योन्यानवष्टंभान्नानावर्णसमुन्नयः ॥ २३ ॥
कर्बुरश्शुक्लहरित आरुः स्यात्कृष्णपिंगलः ।

सितकृष्णस्तु कल्माषः पिंजूषस्सितकाचरः ॥ २४ ॥
कृष्णरक्तसितश्शारः क्रिमिरस्सितलोहितः ।
मधुरस्तु रसज्येष्ठो गुली स्वादुर्मधूलकः ॥ २५ ॥
अम्लस्तु पाचनश्शुक्तो लवणस्तु पटुस्सरः ।
ऊषणस्तु कटुस्तीक्ष्णस्तिक्तस्तु विसरः कटुः ॥ २६ ॥
कषायोऽस्त्री स्वप्रतिष्ठस्तुवरो मधुरांगकः ।
मधुराम्लौ सलवणौ कटुतिक्तकषायकाः ॥ २७ ॥
षट् ते मूलरसाश्शेषा रसका योगयोनयः ।
स्युश्शाडववराश्र्यूषाः श्र्यूष आसोऽपि च क्रमात् ॥ २८ ॥
अम्लाद्या मधुरोपेतास्सांम्लास्तु लवणादयः ।
चाटसस्तीक्ष्णचो रूषश्शुक्तश्च लवणेन तु ॥ २९ ॥
युक्ता वैस्वारकः क्षारस्स्वाद्यश्च कटुकादयः ।
तिक्तिकः कटुतिक्ते स्यात् कुल्या कटुकषायके ॥ ३० ॥
तैलित्सस्तिक्तकाषाय एवं पंचदश द्विकाः ।
क्रमेण शोणिकः श्यावो रातपं रागशालवः ॥ ३१ ॥
सस्वाद्वम्ला लवणाद्याः सस्वादुलवणेषु तु ।
कटुकादिषु कट्वारो माधुरो मधुकः क्रमात् ॥ ३२ ॥
तिक्तकषायौ सस्वादुकटू मधुमधूलिकौ ।
स्वादुतिक्तकषाये तु मधूलोऽमी दश त्रिकाः ॥ ३३ ॥
कट्वाद्यास्साम्ललवणा बोसरः खलुषः क्रमात् ।
कोलश्चाथो साम्लकटू कलुषत्रिखरौ क्रमात् ॥ ३४ ॥
कषायतिक्तौ सोलस्तु शुक्ततिक्तकषायके ।
अम्लतिक्तकषायेऽस्मिन् बालाम्लो बालचूतकः ॥ ३५ ॥
कषायतिक्तौ सपटुकटू वेलानवेलजौ ।
कषायतिक्तलवणेऽसोलोऽथैलारसालकः ॥ ३६ ॥



कटुतिक्तकषाये स्यात्तदेवं विंशतिस्त्रिकाः ।
स्वाद्वम्ललवणोपेताः कट्वाद्या मधुमालकः ॥ ३७ ॥
मधुबोलस्सोरणश्च क्वचिदंत्यः करोलकः ।
सस्वाद्वम्लकटौ तिक्ते लीसुषः परुषः पुनः ॥ ३८ ॥
कषायेऽत्रैव कलुषाकषायौ जालनः पुनः ।
स्वाद्वम्लतिक्ततुवरे सस्वादुलवणोषणे ॥ ३९ ॥
रसकोपशा विकौ कषाये वलजः पुनः ।
तिक्ते तिक्तपटुस्वादुकषाये फलसोत्थुसौ ॥ ४० ॥
सस्वादुकटुतिक्ते तु कषाये स्यात्कलापकः ।
जलोलकस्साम्लपटुकटौ तिक्ते कषायके ॥ ४१ ॥
तुंवरः स्यात्कुवेलश्च खरस्तु लवणे युते ।
अम्लतिक्तकषायैस्तैस्संयुते पलुषः कटौ ॥ ४२ ॥
कट्वाद्या लोडकोऽत्रचैवं चतुष्का दश पंच च ।
स्वादुमेकं विहायान्ये युक्ताः पंच स्युरोलकः ॥ ४३ ॥
आलुकस्तु विहायाम्लं पटुं हित्वा परांजनः ।
ओलकः कटुकं हित्वा विना तिक्तेन चोलकः ॥ ४४ ॥
समोलकः कषायेण षडेवं पंचका रसाः ।
षट्कस्त्वेकष्षड्रसः स्यात् त्रिषष्टिःस्युस्ततो रसाः ॥ ४५ ॥
मधुराम्लादिसंज्ञाश्च शाडवादौ समुन्नयेत् ।
न स्यात्पूर्वरसस्याख्या परावररसाह्वयात् ॥ ४६ ॥
सुरभ्यसुरभी गन्धौ विभिन्नौ तौ च योगतः ।
बहुधा तत्र सुरभिः कटुस्तिक्तः कषायकः ॥ ४७ ॥
समष्टिरप्यतोऽन्यो यो गन्धोऽसुरभिरित्यसौ ।
मल्लिकायां स्थितो गन्धो मङ्गल्या मङ्गलश्च सः ॥ ४८ ॥
जात्यां सौमनसो नागकेसरे गन्धसारणः ।

चंपके सुरभिः पद्मे वासनः कुटजे घुणः ॥ ४९ ॥
कस्तूरिकायामामोदः कुंकुमे पलशीनकः ।
पारिहाव्यो मरुवके पाटले तृणशोणकः ॥ ५० ॥
चन्दने चन्द्रिकस्साले शोणो गन्धिक उत्पले ।
केतके शोणितं सर्जधूपे सरलशोणिकः ॥ ५१ ॥
वकुले स्यात् परिमलो वलनोऽगरुधूपके ।
सहकारे सरलिको गुग्गुलौ त्ववलोलुकः ॥ ५२ ॥
कुन्दोपरालो मदने दुलो जम्बीर(के स्थितः) ।
मल्लचां (स्थितस्तु) खवुकः कर्पूरे मुखवासनः ॥ ५३ ॥
आज्ये समशनोऽशोके सुरवस्तिलके कुलः ।
गात्रे गन्धो गन्धके तु गन्धिकः पित्तले लसः ॥ ५४ ॥
गुदवायौ तु दुर्गन्धः किट्टे कोलः कफे घनः ।
मत्स्यत्वच्यामिषो निंबे तिक्तको गोमुखे सणिः ॥ ५५ ॥
उद्दंशे देहलिर्गोविण्मूत्रयोर्मुकमुर्मुरौ ।
शुक्ले मांसिर्मेदे रूक्षो मूत्रिते त्वन्धमेहलः ॥ ५६ ॥
स्नेहदोषे मेचटिको गूधे स्थालिकवैणिकौ ।
चिस्त्रो यकृति पूये तु पूतिर्मूत्रे तु मेहलः ॥ ५७ ॥
दुष्टव्रणे तु कथितो रुधिरे त्वाममांसकः ।
गन्धशब्दास्त्वमी योज्यास्साम्याद्द्रव्यान्तरेष्वपि ॥ ५८ ॥
एते सत्यादयश्शब्दाश्शब्दस्पर्शादिगोचराः ।
उक्तलिङ्गा गुणार्थास्ते सर्वेऽपि गुणिनि त्रिषु ॥ ५९ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
सामान्यकाण्डे गुणाध्यायः)



## अर्थवल्लिङ्गाध्यायः

गुणयुक्तं क्रियायुक्तं द्रव्ययुक्तं च वक्ति यः ।
स शब्दो वाच्यवल्लिङ्गो बालो वक्ता धनी यथा ॥ १ ॥
बालो डिंभोऽर्भकश्शावः कुमारो दारकः शिशुः ।
अप्युत्तानशयो वत्सः स्तनपस्तु स्तनन्धयः ॥ २ ॥
वटुर्माणवकोऽथ स्याद्वयस्स्थस्तरुणो युवा ।
जीनो जीर्णो वृद्धवयाः प्रवयाः स्थविरो जरन् ॥ ३ ॥
वर्षीयान् दशमी ज्यायान् कनिष्ठोऽवरजोऽनुजः ।
जघन्यजो यवीयांश्च पूर्वजे त्वग्रियोऽग्रजः ॥ ४ ॥
पितुर्विभक्तस्संसृष्टी भ्रात्रार्थैनैकतां गतः ।
पृश्निः किरातोऽल्पतनुर्दुर्बलस्तु कृशस्तनुः ॥ ५ ॥
पीनस्तु पीवरः पीवा प्रबलो मांसलोंऽसलः ।
सिंहसंहननः खंगस्तुण्डिरुन्नतनाभिकः ॥ ६ ॥
पिचण्डिलस्तूदरिलस्तुन्दिलस्तुन्दितुन्दिकौ ।
वलिनो वलिभो बिभ्रद्वली राजीस्तु राजिलः ॥ ७ ॥
एवं सिरालमणिलौ प्रलंबाण्डस्तु मुष्करः ।
केशवः केशिकः केशी रोमशो लोमशस्समौ ॥ ८ ॥
श्मश्रुलो जटिलश्चैवं दन्तुरः स्यादुदग्रदन् ।
किरिभस्तद्विपर्यासे मिर्मिरः स्तब्धलोचनः ॥ ९ ॥
आसीन उपविष्टस्स्यादूर्ध्वज्ञुस्तूर्ध्वजानुकः ।
संज्ञुस्संहतजानुस्स्यात् प्रज्ञुः प्रगतजानुकः ॥ १० ॥
विकलांगस्तु पोगण्डो गडुले न्युब्जकुब्जकौ ।
खुरणास्स्यात् खुरणसो नःक्षुद्रः क्षुद्रनासिकः ॥ ११ ॥

खरणास्स्यात् खरणसो विग्रो विगतनासिकः ।
नतनासेऽवटीटस्स्यादवनाटोऽप्यवभ्रटः ॥ १२ ॥
केकरो वलिरोऽनेडमूकोऽन्धः काण एकदृक् ।
एडस्तु वधिरः कण्व एडमूकस्त्ववाक्छ्रुतिः ॥ १३ ॥
अनेडमूकस्तु जडो जलो मूकः कलोऽप्यवाक् ।
पंगुः श्रोणे खंजकोलौ खोडेऽथ कुकरे कुणिः ॥ १४ ॥
शिपिविष्टस्तु दुश्चर्मा दुर्बलश्च द्विनग्नकः ।
क्षपणश्रमणौ नग्नो नग्नाटश्च दिगंबरः ॥ १५ ॥
आजीवो जीवको जैनो निर्ग्रन्थो मलवार्यपि ।
हृदयालुस्सुहृदयो महेच्छस्तु महाशयः ॥ १६ ॥
प्रौढः प्रगल्भः प्रतिभायुक्तोऽन्यस्त्वपगल्भकः ।
धृष्टो धृष्णुर्वियातश्च शालीनस्तु विपर्यये ॥ १७ ॥
अधीरे कातरत्रस्तुभीरुभीरुकभीलुकाः ।
दरिते भीतचकितत्रस्ताः स्निग्धस्तु वत्सलः ॥ १८ ॥
प्रवीणोऽभिजनोऽभिज्ञो विज्ञो वैज्ञानिकः कृती ।
कृतकृत्यः कृतमुखो निष्णातो दक्षशिक्षितौ ॥ १९ ॥
अग्राम्ये सरलोदारविदग्धच्छेकदक्षिणाः ।
गर्विते स्तब्ध उद्ग्रीवो बाहो धीररस इत्यपि ॥ २० ॥
मूर्खे त्वनेडो देवानांप्रियो यो नामवर्जितः ।
अपि वैधेयमूढाज्ञा मातृशिष्टयथोद्गतौ ॥ २१ ॥
नीचे तु हीनापशदपामरेतरबर्बराः ।
नैकृतस्स्यान्नैकृतिकश्शठः कौनृतिकोऽनृजुः ॥ २२ ॥
कुहकस्स्यात्कापटिको दाण्डाजिनिकजालिकौ ।
ढौण्डुको ढण्डुकश्चाथ कोलाकोऽर्यरतस्सदा ॥ २३ ॥



क्रूरो नृशंसोऽप्यदये धूर्ते व्यंसकवञ्चकौ ।
कौकुटो मायिको मायी मायावी प्रातिहारिकः ॥ २४ ॥
ना दुर्जनः खलः कर्णेजपः पिशुनसूचकौ ।
कद्वदः कुत्सितोऽत्यर्थं परिभोक्ता गुरुस्वभृत् ॥ २५ ॥
नीलीरागः स्थिरप्रेमा हरिद्रारागकः पुनः ।
अस्थिरप्रेम्णि गोष्ठश्वः पुनस्स्थाने स्थितो द्विषन् ॥ २६ ॥
अन्वेष्टा स्यादनुपदी चिद्रूपस्तु सुमानसः ।
स्वच्छन्दोऽपावृतस्स्वैरी स्वतंत्रो निरवग्रहः ॥ २७ ॥
परच्छंदः पराधीनः परवान् परतंत्रकः ।
निघ्नः प्रसव्य आयत्तो विधेयो गृह्यको वशः ॥ २८ ॥
अहंयुस्स्यादहंकारी शुभंयुस्तु शुभान्वितः ।
सूक्ष्मदर्शी कुशाग्रीयधीर्विलक्षस्सविस्मयः ॥ २९ ॥
यद्भविष्यो दैवपरो यद्वदः स्यादनुत्तरः ।
परीक्षकः कारणिक उद्युक्ते प्रसितोत्सुकौ ॥ ३० ॥
अन्तर्वाणिश्शास्त्रवित्स्यादविनीतस्समुद्धतः ।
प्रत्युत्पन्नमतिस्तु स्यात्तत्कालोत्पन्नधीर्नरः ॥ ३१ ॥
प्रणेयः प्रश्रितो वश्यो विधेयो निभृतो यतः ।
क्रोधनः कोपनोऽमर्षी चण्डस्तु भृशकोपनः ॥ ३२ ॥
सहिष्णुस्सहनस्सोढा तितिक्षुः क्षमिता क्षमी ।
हर्षमाणो विकुर्वाणः प्रमना मुदितस्समुत् ॥ ३३ ॥
दुर्मना विमना अन्तर्मनास्स्यादुत्क उन्मनाः ।
दोषदर्शी पुरोभागी कमनः कामनोऽनुकः ॥ ३४ ॥
कामुकः कमिताभीकः कम्रः कामयिताभिकः ।
तृष्णकु गर्धनो गृध्नुः लिप्सुर्लुब्धोऽभिलाषुकः ॥ ३५ ॥

लोलुपे लोलुभो लोलो लंपटो लालसोऽपि च ।
बुभुक्षुः क्षुधितश्श्रान्तो जिघत्सुरशनायितः ॥ ३६ ॥
पिपासितस्तु तृषितः पिपासुस्तर्षितस्सतृट् ।
मत्ते शौंडोत्कटक्षीबाश्श्राद्धः श्रद्धालुरास्तिकः ॥ ३७ ॥
नास्तिकस्तद्विपर्यासे गृहयालुर्ग्रहीतरि ।
संशयालुस्तु संदेग्धा पतयालुस्तु पातुकः ॥ ३८ ॥
दयालुः स्यात्कारुणिकोऽनुकंप्यः कारुणस्समौ ।
स्वप्नक् शयालुर्निद्रालुर्निद्राणश्शयितस्समाः ॥ ३९ ॥
लज्जाशीलोऽपत्रपिष्णुर्वर्तिष्णुर्वर्त्तनस्समौ ।
निराकरिष्णुः क्षिप्नुस्स्यात् वर्धिष्णुर्वर्धनस्समौ ॥ ४० ॥
उन्मदिष्णुस्तु सोन्मादोऽलङ्करिष्णुस्तु मण्डनः ।
भूष्णुर्भविष्णुर्भविता प्रजनिष्णुस्तु भावुकः ॥ ४१ ॥
उत्पतिष्णुस्तूत्पतिता रोचिष्णू रोचनस्समौ ।
स्थास्नुस्तु स्थायुकस्स्थायी शरारुर्हिंस्रघातुकौ ॥ ४२ ॥
वेदिता विदुरो विन्दुस्सान्द्रस्स्निग्धस्तु मेदुरः ।
आशंसुराशंसितरि वन्दारुरभिवादकः ॥ ४३ ॥
जागरूको जागरिता श्लक्ष्णवाक् तु प्रियंवदः ।
शक्लो मधुरवाक् चाथ रूक्षो लूक्षो विपर्यये ॥ ४४ ॥
वदो वदावदो वक्ता वागीशो वाक्पतिस्समौ ।
वाचोयुक्तिपटुर्वाग्मी वावदूकश्च दक्षवाक् ॥ ४५ ॥
जल्पाकस्त्वपि वाचालो वाचाटो बहुगर्ह्यवाक् ।
मुखरो दुर्मुखोऽबद्धमुखो मातृमुखोऽपि च ॥ ४६ ॥
कद्वदो गर्ह्यवादी स्याल्लोहलोऽस्फुटभाषणः ।
अधरो दीनवादी स्यात्सम्मुखः प्रतिभातवाक् ॥ ४७ ॥



नानीकरस्तु नानीकवाक् स्वनोऽशोभनस्वरः ।
कुवदे कुचरश्शब्दकारे रवणशब्दनौ ॥ ४८ ॥
व्युत्पन्नः प्रहतः क्षुण्णो वचनेस्थित आश्रवः ।
परान्नः परपिण्डादः परजातपरैधितौ ॥ ४९ ॥
सर्वान्नीनस्सर्वभक्ष आमिषादी तु शौल्किकः ।
आत्मंभरिः कुक्षिंभरिः भक्षको घस्मरोऽद्मरः ॥ ५० ॥
आशूनस्स्यादौदरिको विमुक्तो विजिगीषया ।
ह्रीणो ह्रीतो लज्जितस्स्यादन्वेष्टा तीक्ष्णसाधनैः ॥ ५१ ॥
अद्भुते धीरविस्रब्धावुत्तालः कर्मणि द्रुतः ।
कुटुंबव्यापृते तु द्वावभ्यागारिक उत्थितः ॥ ५२ ॥
दीर्घदृष्टिस्तु यो दूरादर्थानर्थौ निरीक्षते ।
आमुष्यायण उत्पन्नः प्रख्यातकुलतः पितुः ॥ ५३ ॥
वैरंगिको विरागार्हे उत्पश्यः पुनरुन्मुखः ।
चतुरः पेशलो दक्षस्सूत्थानः पटुरुष्णकः ॥ ५४ ॥
मन्दस्तुन्दपरिमृज आलस्यश्शीतकोऽलसः ।
क्षेमंकरोऽरिष्टतातिश्शिवतातिश्शिवंकरः ॥ ५५ ॥
लक्ष्मीवान् लक्ष्मणश्श्रीलो महामात्रोऽधिकर्द्धिकः ।
उदारोदीर्णधन्यास्तु महात्मा सुकृतीति च ॥ ५६ ॥
समृद्धस्स्यादुपचितो धनवानस्तिमान् समौ ।
आढ्यस्त्विभ्यो धनी नेता त्वीश्वरो नायकः प्रभुः ॥ ५७ ॥
अधिभूरधिपोऽधीश ईशिताधिपतिः पतिः ।
ईशः परिबृढस्स्वामी स्थूललक्षो बहुव्यये ॥ ५८ ॥
कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः ।
आशयश्चाप्यदाता च दरिद्रे स्यादकिंचनः ॥ ५९ ॥

अपि दुस्स्थक्रूरदीननीचदुर्गतदुर्विधाः ।
मार्गणस्स्याद्याचनको याचकोऽर्थी वनीपकः ॥ ६० ॥
आर्यः कौलेयको जात्यः कुलीनः कुलजोऽभिजः ।
जगत्त्रसचरप्राणमिषदिंगच्च जंगमम् ॥ ६१ ॥
स्थावरं तस्थिवच्चान्यदुभयं तु चराचरम् ।
वा क्लीं प्रधानं प्रमुखप्रबर्हप्रवरोत्तमाः ॥ ६२ ॥
मुख्यवर्यवरेण्याश्च प्रवेकोऽनपरार्थ्यवत् ।
श्रेष्ठः प्राग्रहरं प्राग्रमग्रमग्रीयमग्रियम् ॥ ६३ ॥
परार्थ्यं ग्रामणीः स्पर्ध्यं जात्यं च वरमग्रणीः ।
उपाग्रस्तु गुणः पुंसि क्लीबे स्यादुपसर्जनम् ॥ ६४ ॥
तत्तु स्यादासेचनकं न तृप्तिर्यस्य दर्शनात् ।
पवित्रं प्रयतं पूतं मेध्यं शुद्धं शुचीति च ॥ ६५ ॥
निर्णिक्तं शोधितं मृष्टं निश्शोध्यमनवस्करम् ।
विमले वीध्रं मलिने द्वौ कच्चरमलीमसौ ॥ ६६ ॥
आत्तगन्धोऽभिभूतस्स्यात् बद्धे कीलितसंयतौ ।
आक्षिप्तो हतकः क्षिप्तो विक्लबो विह्वलस्समौ ॥ ६७ ॥
विहस्तो व्याकुलो व्यग्रश्चले संकुसुकोऽस्थिरः ।
व्यसनार्त्तस्तूपरक्त आततायी वधोद्यतः ॥ ६८ ॥
शत्रूणां तापयितरि द्विषंतपपरंतपौ ।
द्वेष्यस्त्वक्षिगतोऽनिष्टो दुर्भगोऽपि च विप्रिये ॥ ६९ ॥
चक्षुष्यस्सुभगः कान्तो दयितो वल्लभः प्रियः ।
गेहेनर्दी गृहेशूरः पिण्डीशूरो गृहे प्रभुः ॥ ७० ॥
वध्यो विष्यो विषेण स्यात् मुसल्यो मुसलेन च ।
निष्कासितोऽपकृष्टस्स्यादपध्वस्तस्तु धिक्कृतः ॥ ७१ ॥



कर्मक्षमोऽलंकर्मीणः कर्मशूरस्तु कर्मठः ।
कार्मस्तु कर्मशीलः स्याद्दीर्घसूत्रश्चिरक्रियः ॥ ७२ ॥
कर्मण्यकृत् कर्मकरः कर्मकारस्तु तत्क्रियः ।
निर्वार्यः कार्यकृद्यः स्याद्युक्तस्सन् सत्त्वसंपदा ॥ ७३ ॥
क्रियावान् कर्मवान् कर्मी कुण्ठो मन्दः क्रियासु यः ।
स आयश्शूलिको यस्स्यादन्वेष्टा तीक्ष्णसाधनैः ॥ ७४ ॥
गर्ह्योऽपकृष्टचेलार्वरेफयाप्याधमावमाः ।
प्रतिकृष्टावद्यखेटनिकृष्टाणककुत्सिताः ॥ ७५ ॥
जघन्यं तु कुपूयं स्यादसारं लघु फल्गु च ।
पुंस्यादिराद्यपौरस्त्यप्रथमप्रमुखादिमाः ॥ ७६ ॥
अग्रच्यं त्वग्रिममग्रस्थं मध्यमीयं तु मध्यमम् ।
अन्त्ये जघन्यपाश्चात्यचरमान्तिमपश्चिमाः ॥ ७७ ॥
करंबः कंबरो मिश्रः संपृक्तः खचितस्समाः ।
चलाचलं तु प्रचलं चपलं चंचलं चलम् ॥ ७८ ॥
चिकुरं चटुलङ्कंप्रं पारिप्लवपरिप्लवौ ।
स्थास्न्वेकरूपं कूटस्थं स्थेयान् स्थेष्ठोऽप्यतिस्थिरे ॥ ७९ ॥
विशालमुरु विस्तीर्णं विपुलं पृथुलं पृथु ।
स्फारं भद्रं बृहद्व्यूढमुदूढं बहुलं बहु ॥ ८० ॥
प्रांशूच्चमुन्नतं तुङ्गमुदग्रं तूच्छ्रिताग्रकम् ।
न्यङ्नीचह्रस्वखर्वास्तु वामने दीर्घमायते ॥ ८१ ॥
विशालं विकरालं स्याद्विकटं च विशङ्कटम् ।
वर्त्तुलं निस्तलं वृत्तं सुवृत्तं परिमण्डलम् ॥ ८२ ॥
चिपिटः पिच्छितो व्यूढे स्थपुटं विषमोन्नतम् ।
आनतं तु नतं नम्रं बन्धुरं तून्नतानतम् ॥ ८३ ॥

क्षीणं क्षामं विलिष्टं स्यात् स्थूलं तु बहलं दृढम् ।
प्रभूतं प्रचुरं प्राज्यं बहलं बहुलं बहु ॥ ८४ ॥
अदभ्रमधिकं भूरि भूयिष्ठं पुरुहं पुरु ।
समग्रं सकलं सर्वं समस्तं निखिलाखिले ॥ ८५ ॥
अखण्डकृत्स्ननिश्शेषपूर्णविश्वसमानि च ।
खण्डनेमोनविकलाः पूर्णे भरितपूरितौ ॥ ८६ ॥
संपूर्णश्चाथ वशिकं शून्यं तुच्छश्च रिक्तकम् ।
पुराणे प्राक्तनप्रत्नपुरातनचिरन्तनाः ॥ ८७ ॥
नूत्ने त्वभिनवो नव्यो नवीनो नूतनो नवः ।
शाश्वते त्वमृतो नित्यस्सनातनसदातनौ ॥ ८८ ॥
सद्यस्तने तु साद्यस्कप्रत्यग्राभ्यग्रशारदाः ।
ह्यस्तनश्वस्तनाद्याः स्युर्ह्यआदिस्थेषु वस्तुषु ॥ ८९ ॥
कालवाच्यव्ययेभ्यः स्यादन्येभ्योऽपि तथा तनः ।
न्यक् स्यादधोमुखं न्युब्जमुदुब्जोत्तानमुन्मुखे ॥ ९० ॥
उदक्प्रत्यक् परागर्वाक् प्राक्च तिर्यगवागपाक् ।
विष्वक्चैवमुदीचीनप्रमुखाः स्युर्यथाक्रमम् ॥ ९१ ॥
दिग्देशकालवचनमुदगादिकमव्ययम् ।
दिग्देशकालसंबन्धिपदार्थेष्वभिधेयवत् ॥ ९२ ॥
यस्सहांचति सध्र्यचङ् स विष्वद्र्यङ् विष्वगंचति ।
देवानंचति देवद्र्यङ् सध्रीचीनादि चोन्नयेत् ॥ ९३ ॥
अविलंबितमुच्चण्डं संशितं तु सुतेजितम् ।
उत्पिञ्जलं समुत्पिञ्जमिति द्वे भृशमाकुले ॥ ९४ ॥
अनादृते त्ववज्ञातमवतीर्णापहस्तितम् ।
चलितप्रेंखिताधूतवेल्लिताकंपिता धुते ॥ ९५ ॥



रुचिते हृद्यलषितवांछितेष्टेडितेहिताः ।
संवीतं स्याद्वलयितं वेष्टितं रुद्धमावृतम् ॥ ९६ ॥
नुन्नास्तनुत्तप्रहितक्षिप्तविद्धास्स्युरीरिते ।
बद्धे सन्नाहितं नद्धं मुद्रितं सन्दितं सितम् ॥ ९७ ॥
सन्तापितं धूपायितं दूनं तप्तश्च धूपिते ।
मार्गिते मृगितान्विष्टावन्वेषितगवेषितौ ॥ ९८ ॥
लब्धाप्तासादितप्राप्तभूतविन्नास्तु भाविते ।
प्रयत्ते मुदितप्रीतहृष्टास्सुहिततृप्तवत् ॥ ९९ ॥
आबर्हिते तूद्बृहितोन्मूलितोत्पाटितोद्धृताः ।
ऊतगोपायितत्रातत्राणगुप्तास्तु रक्षिते ॥ १०० ॥
मनिते विदितज्ञातौ बुधिते बोधबुद्धवत् ।
त्यक्ते तु विधुतोत्सृष्टहीनधूतसमुज्झिताः ॥ १०१ ॥
कृत्ते लूनच्छिन्नदातवृक्णच्छातच्छितार्दिताः ।
स्रस्ते भ्रष्टध्वस्तपन्नगलितस्कन्नविच्युताः ॥ १०२ ॥
प्रेंखोलितं तरलितं लुलितं प्रेंखितश्च तत् ।
भजमाने प्राप्तयुक्तन्याय्यान्यौपयिकोचिते ॥ १०३ ॥
न्यस्ते त्वारोपितोऽध्यस्तो निहितोऽपहितो हितः ।
उपसन्नं तूपनतमुपप्राप्तमुपस्थितम् ॥ १०४ ॥
शुश्रूषितं परिवसितमुपासितश्च वरिवसितश्च समम् ।
अपचायितं नमसितं नमस्यितं सममपचितश्च ॥ १०५ ॥
पणितपणायितपनिताः पनायितस्तुतनुतेडिताश्शस्ते ।
वर्णितगीर्णौ च तथा संगीर्णोपश्रुतौ प्रतिज्ञाते ॥ १०६ ॥
उन्नोत्ततिमितक्लिन्नस्नपितार्द्राणि सार्द्रवत् ।
स्युः प्रत्यवसिते प्सातजग्धान्नाशितखादिताः ॥ १०७ ॥

ग्रस्तग्लस्ताभ्यवहृतभुक्तभक्षितजक्षिताः ।
परिक्षिप्तं तु निवृतं निदिग्धोपचितौ समौ ॥ १०८ ॥
प्राप्ते प्रणिहितापन्नौ विस्मृतोऽन्तर्गतेऽस्मृते ।
संगूढं स्यात् संकलितं स्यन्नं रीणं स्नुतं स्नुतम् ॥ १०९ ॥
अवरीणो धिकृतस्स्याद्दृब्धे ग्रथितमुद्रितौ ।
संकीर्णे संकुलाकीर्णौ विस्तृते विसृतं ततम् ॥ ११० ॥
सिद्धे निर्वृत्तनिष्पन्नौ भिन्ने भेदितदारितौ ।
वेधितच्छिदितौ विद्धे तष्टत्वष्टौ तनूकृते ॥ १११ ॥
ऊतं स्यूतमुतं तन्तुसन्तते प्रार्थितेऽर्दितम् ।
उद्धृतं समुदस्तं स्यान्मर्मस्पृक् स्यादरुन्तुदम् ॥ ११२ ॥
गुण्डितं रूषिते क्लिष्टे क्लेशितं पूजितेऽञ्चितम् ।
ज्ञप्तं तु ज्ञपिते हन्नं गूने मीढं तु मूत्रिते ॥ ११३ ॥
पुषिते पुष्टमुद्गूर्णोद्यत(यत्ताः प्रयत्नवान्) ।
दमिते दान्तं शमिते शान्तमुद्वान्तमुद्गते ॥ ११४ ॥
पन्नं प्रपतिते सन्नं लिष्टे तुन्नं तु पीडिते ।
निष्पक्के क्वथितं सोढे क्षान्तं निचितमाचिते ॥ ११५ ॥
मुषिते लुण्ठितं यस्ते निसृष्टं वृद्धमेधिते ।
काचितं शिक्यिते दिश्यं दिग्भवेऽभ्रभवेऽभ्रियम् ॥ ११६ ॥
यज्ञियं यज्ञकर्मार्हे चक्षुष्यं चक्षुषे हितम् ।
तत्तद्गात्रभवे दन्त्यं हस्त्यमोष्ठ्यमितीदृशाः ॥ ११७ ॥
पुंसः पौंस्नम् स्त्रियाः स्त्रैणमग्नेराग्नेयमित्यपि ।
दण्डवान् दण्डिको दण्डीत्येवं नेयमदन्ततः ॥ ११८ ॥
व्रीहिणो व्रीहिमन्तस्स्युर्यवमन्तो यवान्विताः ।
निर्जने स्थान एकान्तं विविक्तं विजनं तथा ॥ ११९ ॥



छन्नं गुह्यं निश्शलाकं रहः क्लीबोऽथवाव्ययम् ।
गुह्यं रहस्यमित्येतावप्रकाश्येऽपि वस्तुनि ॥ १२० ॥
समं समानं सविधं सदृक्षं सदृशं सदृक् ।
तुल्यं सवर्णं शब्देभ्यः परे स्युः प्रतिमा प्रभा ॥ १२१ ॥
आभा प्रख्योपमाभिख्या प्रकारस्सन्निभं निभम् ।
निकाशाद्याश्च साम्यार्थास्समे स्युश्शब्दतः पराः ॥ १२२ ॥
परस्परं स्यादन्योऽन्यमितरेतरमित्यपि ।
वक्रं वृजिनमाविद्धमूर्मिमत् कुञ्चितं नतम् ॥ १२३ ॥
अरालं कुटिलं भुग्नमवक्रे प्रगुणोऽप्यृजुः ।
सत्वरं त्वरितं तूर्णमरं क्षिप्रं लघु द्रुतम् ॥ १२४ ॥
अजिरं चपलं शीघ्रमविलंबितमाशु च ।
विरलं तनु विश्लिष्टमघनं तलिनं तथा ॥ १२५ ॥
निबिडं निबिरीसं स्यात् घनं सान्द्रं निरंतरम् ।
विकटं तु विरूपं स्यात् संबाधस्संकटस्समौ ॥ १२६ ॥
प्रतीपं प्रतिकूलं स्यादनुकूलं विपर्यये ।
अनुलोममनूचीनं प्रतिलोमं विपर्यये ॥ १२७ ॥
अव्ययीभावोऽनुपदमन्वगन्वक्षमित्यपि ।
एकसर्गोऽनन्यवृत्तिरेकाग्रैकायनैकगम् ॥ १२८ ॥
अप्येकतान एकान्तोऽप्येकायनगतोऽपि च ।
साधारणं तु सामान्यं मोघं व्यर्थमपार्थकम् ॥ १२९ ॥
नित्यानवरताजस्रसततश्रांतसंतताः ।
अनारतं चाविरतमसक्तं चानिशं नपुम् ॥ १३० ॥
अतिमात्रेऽतिमर्यादमतिवेलातिमानकम् ।
भृशमत्यन्तमत्यर्थमधिकोद्गाढनिर्भरम् ॥ १३१ ॥

तीव्रं तु गाढमेकान्तं नितान्तं दृढबाढवत् ।
वशेऽनर्गलमुद्दाममुच्छृङ्खलमयन्त्रितम् ॥ १३२ ॥
परोक्षेऽतीन्द्रियोऽध्यक्षप्रत्यक्षौ तु समक्षवत् ।
सकाशं स्यात् सन्निहिते समन्तं तु समन्तिकम् ॥ १३३ ॥
प्रकाशं प्रकटं स्पष्टमुल्बणं विशदं स्फुटम् ।
सुन्दरं रुचिरं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥ १३४ ॥
शोभनं सुषमं चारु हृद्यं चौक्षं मनोहरम् ।
न्युंखं हारि प्रियं साधु लडहं च मनोरमम् ॥ १३५ ॥
अल्पं सूक्ष्ममणु स्तोकं दभ्रं दहरमर्हकम् ।
किञ्चिन्मात्रम्मितं दभ्रं श्लक्ष्णं तनु तु पेलवम् ॥ १३६ ॥
अतिरिक्तोऽतिशयितो दृढस्समधिकोऽधिकम् ।
चतुरं पेशलं दक्षं कटु तूल्बणमुत्कटम् ॥ १३७ ॥
विशेषणं क्रियायास्स्युस्समाद्याः क्ली च तद्यथा ।
पुत्रं धत्ते सममिति नित्याद्यास्तु गुणस्य च ॥ १३८ ॥
नित्यं धत्ते सितो नित्यमिति द्रव्ये पुनस्त्रिषु ।
उभयेऽपि यथा धत्ते समो नित्योऽर्थवानिति ॥ १३९ ॥
प्रथमं चरमं पूर्वमित्याद्यप्येवमुन्नयेत् ।
समीपनिकटाभ्यग्राभ्यर्णाभ्याशान्तिमा इव ॥ १४० ॥
सदेशसविधासन्नसन्निकृष्टसवेशवत् ।
उपकण्ठसमर्यादसवेधानि सनीडकम् ॥ १४१ ॥
उपान्ते विप्रकृष्टे तु दूरं व्यवहितं परम् ।
भासुरं भविकं भव्यं कल्याणं श्वोवसीयसम् ॥ १४२ ॥
श्वश्श्रेयसं शिवं भद्रं कुशलं सूनृतं शुभम् ।
श्रेयश्चैते समीपाद्या धर्मे क्ली तद्वति त्रिषु ॥ १४३ ॥



सुखं दुःखं मलं छिद्रं किलासं सिध्ममर्मरौ ।
रभसः पलितं श्वित्रमेतेऽपि त्रिषु धर्मिणि ॥ १४४ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
सामान्यकाण्डे अर्थवल्लिङ्गाध्यायः)

---

(सामान्यकाण्डस्समाप्तः)

---

## अथ द्व्यक्षरकाण्डः

### पुंलिङ्गाध्यायः

अथ काण्डैरनेकार्थाः प्रोच्यन्तेऽत्र परैस्त्रिभिः ।
द्व्यक्षरास्त्र्यक्षराश्शेषा इति काण्डेषु ते क्रमात् ॥ १ ॥
अकारादि हकारान्तं नाम्नामाद्यक्षरक्रमात् ।
संग्रहो द्व्यक्षरादीनां प्रोक्तान्प्रायो विना पुरा ॥ २ ॥
अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने ।
व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु ॥ ३ ॥
अर्कोऽर्कपर्णे स्फटिके ज्येष्ठभ्रातरि भास्वति ।
अवयश्शैलमेषार्का अद्रयोऽर्कगिरिद्रुमाः ॥ ४ ॥
अष्टावतिशयक्षौमावर्घौ पूजाप्रतिक्रियौ ।
अर्याश्शास्तृस्वामिवैश्यास्सर्पे वृत्रासुरेऽप्यहिः ॥ ५ ॥
अंशुस्सूत्रादिसूक्ष्मांशेऽप्यंकश्चिह्नेऽतिकोरसोः ।
आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि ॥ ६ ॥
यत्नेऽर्केऽग्नौ मतौ वातेऽप्याखू सूकरमूषिकौ ।
आधिस्तु व्यसने चित्तदुःखेऽधिष्ठानबंधयोः ॥ ७ ॥
इंद्रो विषात्मशक्रार्केष्वीश्वरे नामतः परः ।
इष्वोऽभिलाष आचार्य ऊमो व्योम्नि पुरेऽपि च ॥ ८ ॥
ग्रीष्मोष्णबाष्पा ऊष्माण ऊर्जावुत्साहकार्त्तिकौ ।
ऋषिस्तु वेदे भृग्वादौ ज्ञानवृद्धे दिगंबरे ॥ ९ ॥
ओघः परंपरायां स्याज्जलस्रोतसि संचये ।
करो घनोपले हस्ते प्रत्याये रश्मिशुण्डयोः ॥ १० ॥
दातुं भूषितकन्यायां कूपो गर्ते प्रहावपि ।



क्षणो व्यापारवैकल्ये कालभेदाल्पकालयोः ॥ ११ ॥
उत्सवे परतन्त्रत्वे मध्यावसरपर्वसु ।
कन्तू कुसूलकन्दर्पौ प्राज्ञकाव्यकृतौ कवी ॥ १२ ॥
कण्ठो गलेऽन्तिके शब्दे कपयोऽर्कभवानराः ।
गुडभस्मरस : क्षाराः क्षोदो रजसि पेषणे ॥ १३ ॥
क्रतू अध्वरसंकल्पौ कल्पान्तेऽपचये क्षयः ।
कुक्षौ वासे च कच्छस्तु पार्श्वे गुह्यांबरे तटे ॥ १४ ॥
कारुस्तु विश्वकर्मापि धान्यांशे शीकरे कणः ।
कालो दिष्टे यमे काचो मृद्भेदे शिक्यदृग्रुजोः ॥ १५ ॥
उत्पातेऽके ध्वजे केतुः क्लेदौषधिशशांकयोः ।
कोणाश्शब्दाश्रिलगुडाः कल्पो न्याये सुरद्रुमे ॥ १६ ॥
विकल्पेऽपि च कक्षस्तु गुल्मे स्पर्धापदे तृणे ।
काम्यस्पृहास्मराः कामाः कलहेऽन्त्ययुगे कलिः ॥ १७ ॥
कुंभो गजशिरोऽन्तेऽपि पक्ष्यर्केष्वनिलाः खगाः ।
खरुः पुंस्मररुद्रेषु गर्मुद्रुक्मे खगे रवौ ॥ १८ ॥
गणाः प्रमथसंख्यौघा ग्रावाणौ पर्वतोपलौ ।
तन्तुनागाग्रहौ ग्राहौ गुल्मो व्यूढा च वाहिनी ॥ १९ ॥
गण्डो गर्वेऽप्यथार्कादिसत्त्वादानाग्रहा ग्रहाः ।
गुणस्त्वावृत्तिशब्दादिज्येंद्रियामुख्यतन्तुषु ॥ २० ॥
ग्रंथो द्रव्यं वचश्शास्त्रं द्वात्रिंशद्वर्णसंचयः ।
गर्भोऽपवरकेऽन्नेऽग्नौ सुते पनसकंटके ॥ २१ ॥
कुक्षौ कुक्षिस्थजन्तौ च गंधो लेशे महीगुणे ।
घृणिर्ज्वालांशुवीचीषु चरुः स्थाल्यां हविष्यपि ॥ २२ ॥
चटुश्चाटुश्च राजादिस्तुतौ पशुपिंचिडके ।

चक्री विष्णौ कुलालेऽहौ च्युपौ पवनसंक्रमौ ॥ २३ ॥
वशाभिप्राययोश्छंदो जूर्णी रविहविर्भुजौ ।
टंकौ प्रमाणगर्वौ च डिंबः प्लीहखगांडयोः ॥ २४ ॥
तर्काः कांक्षावितर्कोहास्त्वष्टा ताक्ष्णि द्युशिल्पिनि ।
मणिदोषे भये त्रासस्तिष्यः पुष्ये कलौ युगे ॥ २५ ॥
द्वारपाले यमे दण्डी दन्तोऽद्रिकटके रदे ।
दायो दाने यौतकादिधने वित्ते च पौतृके ॥ २६ ॥
दवदावौ वनारण्यवह्न्योः स्वर्गार्कयोर्द्युवा ।
धवो वृक्षे नरे पत्यौ ध्वांक्षः स्याद्वायसे बके ॥ २७ ॥
धातुर्वातादिशब्दादिगैरिकादित्वगादिषु ।
महाभूतेष्विंद्रियेषु शब्दयोनिस्वभावयोः ॥ २८ ॥
लोहेऽर्थे गैरिकस्वर्णरेतोऽस्थिषु विशेषतः ।
नरोऽर्जुने मनुष्ये च नाकः स्वर्गान्तरिक्षयोः ॥ २९ ॥
ग्राहाश्चाहिगजा नागा नाभिः क्षत्रे महानृपे ।
न्यंकुर्गुरुकुलेवासी शिष्यो मुनिमृगावपि ॥ ३० ॥
नाशः पलायने मृत्यौ परिध्वंसेऽप्यदर्शने ।
नग्ना वैतालिकाद्याश्च पिण्डो वृत्ते तनौ गुडे ॥ ३१ ॥
पीयुः काल उलूके च पीलुः काण्डे गजे द्रुमे ।
पुण्ड्राः कृमीक्षुतिलकाः पत्री श्येने शरे खगे ॥ ३२ ॥
प्रेषणे मर्दने प्रैषः पुंखः श्वेतशरांगयोः ।
पवी वातास्त्रधारे च पाकपोतौ शिशावपि ॥ ३३ ॥
पट्टो नेत्रेऽपि शाणे स्यात् पिण्डिः कल्केऽपि तैलजे ।
पणो मूल्ये ग्लहे माने कार्षिकव्यवहारयोः ॥ ३४ ॥
द्यूते विक्रय्यशाकादिबद्धमुष्टौ भृतौ धने ।



पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु ॥ ३५ ॥
पार्श्वद्वारे विरोधेऽर्धमासे चुल्लिबिलेऽन्तिके ।
प्रायो वयसि बाहुल्ये तुल्यानशनमृत्युषु ॥ ३६ ॥
पाशो रज्जौ कर्णशब्दात्परः कर्णेऽतिशोभने ।
क्रमनिम्नमहीभागकपिप्लुतिखगाः प्लवाः ॥ ३७ ॥
प्राणस्तु प्रणवे जीवे जीविते परमात्मनि ।
इन्द्रिये वायुभेदे च बलान्तर्यामिणोरपि ॥ ३८ ॥
श्वेतार्के डाडिमे फालो बन्धास्सीसाधियन्त्रणाः ।
बलिः पूजोपहारे च दैत्यभेदे करेऽपि च ॥ ३९ ॥
बाष्पोऽश्रुण्यंबुधूमे च भानवोऽर्कहरांशवः ।
भ्रूणोऽर्भके स्त्रैणगर्भे गर्भिण्यां श्रोत्रियद्विजे ॥ ४० ॥
भवो भद्रे हरे प्राप्तौ सत्तासंसारजन्मसु ।
भागा भाग्यांशतुर्यांशा भरभारौ गरिम्ण्यपि ॥ ४१ ॥
भरवीवधयोश्चान्त्यौ भूस्पृशौ वैश्यमानवौ ।
विश्लेषे दारणे भेदो भेनस्सूर्ये निशाकरे ॥ ४२ ॥
भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु ।
पदार्थमात्रे सत्तायामात्मयोनिस्वभावयोः ॥ ४३ ॥
भोगो राज्ये धने सौख्ये पालनाभ्यवहारयोः ।
फणे देहे च सर्पस्य वेश्यादीनां भृतावपि ॥ ४४ ॥
मन्वावृगादिगुह्योक्ती मन्युर्दैन्येऽध्वरे क्रुधि ।
मर्को मनसि पायौ च मोहाः क्रुन्मौर्ख्यमूढताः ॥ ४५ ॥
मार्गो मृगपदे मासि सौम्यर्क्षेऽन्वेषणेऽध्वनि ।
मूत आतश्चने व्रीहौ व्रीह्यादेर्बन्धने तृणैः ॥ ४६ ॥
मृगस्तु मृगशीर्षेऽपि मोक्षो मृत्यौ मरुद्गिरौ ।
यन्ता हस्तिपके सूते यज्ञोऽग्न्यात्महरीष्टिषु ॥ ४७ ॥

ययुरश्वेऽश्वमेधाश्वे योगो विस्रब्धघातिनि ।
प्राप्तौ सन्नहनोपायध्यानसंगतियुक्तिषु ॥ ४८ ॥
रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे ।
रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः ॥ ४९ ॥
रश्मी ज्वालाप्रग्रहौ च रदो दन्तविलेखयोः ।
राजा तु क्षत्रिये चन्द्रे लताभेदे नृपे प्रभौ ॥ ५० ॥
रागोऽनुरागे लाक्षादौ त्विषि राकस्तु पूष्णि च ।
रंगौ तु स्थानरागौ च भूप्रदेशे मृगे लिगुः ॥ ५१ ॥
भोजने लेपने लेपो लोकस्स्याद्विष्टपे जने ।
वंशः पृष्ठास्थ्नि गेहोर्ध्वकाष्ठे वेणौ गणे कुले ॥ ५२ ॥
नासोर्ध्वास्थ्नीक्षुभेदे च वह्निरुक्षिण हयेऽनले ।
वलो धान्येऽसुरे काके गवां श्वासेऽनिले वहः ॥ ५३ ॥
वेणू वेदसहस्रांशू गोष्ठाध्वनिवहा व्रजाः ।
वालौ पुच्छाश्वपुच्छौ च व्याजश्छद्मापदेशयोः ॥ ५४ ॥
विधी तु दैवकालौ च वाजी त्वश्वे शरे खगे ।
विधुर्निशाकरे काले विष्णौ वातेऽग्निरक्षसोः ॥ ५५ ॥
बृन्दविन्यासयोर्व्यूहो वृषोक्षण्यऽग्र्ये पुमिन्द्रयोः ।
वृत्राश्शत्रुतमोदैत्या वेगः किंपाकरंहसोः ॥ ५६ ॥
वेधसो विष्णुधातृज्ञाश्शादः कर्दमशष्पयोः ।
शंभुर्धातृहरार्हत्सु शक्रः कुटजवज्रिणोः ॥ ५७ ॥
शंबो वज्रे लोहमयवलये मुसलाग्रगे ।
शरो रसाग्रसारेऽपि शूकोऽनुक्रोशशुंगयोः ॥ ५८ ॥
शब्दोऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणे ध्वनौ ।
शंकुः पत्रसिराजाले कीलेऽस्त्रे मेढ्रसंख्ययोः ॥ ५९ ॥
कुक्कुटेऽग्नौ मयूरेंऽशौ वृक्षे केतुग्रहे शिखी ।



पद्ये यशसि च श्लोकष्षण्डौ विट्चरपण्डकौ ॥ ६० ॥
ष्व्यूमस्यूमौ जले चन्द्रे तन्तुमंगलरश्मिषु ।
सम्राजोऽग्नीन्द्रविष्ण्वर्का यश्च स्यान्मण्डलेश्वरः ॥ ६१ ॥
राजसूयेन येनेष्टं राज्ञश्शास्त्याज्ञया च यः ।
सर्गास्तु सर्जनाध्यायस्वभावोत्साहनिश्चयाः ॥ ६२ ॥
सन्धिश्श्लेषे सुरुंगायां नाट्यांगे योनिरन्ध्रयोः ।
स्वरोऽकाराद्युदात्ताद्योष्षड्जादौ प्राणिनां स्वने ॥ ६३ ॥
सरटौ पक्षिजलदौ स्पशौ तु चरसंयुगौ ।
स्तंभौ स्थूणाजडीभावौ यूपांशे कुलिशे स्वरुः ॥ ६४ ॥
स्कन्दो धाता नदीकूलं साद्यश्वारोहसूतयोः ।
सालो मत्स्ये वृक्षभेदे प्राकारद्रुममात्रयोः ॥ ६५ ॥
सिक्थो ना भक्तपूलाके मधूच्छिष्टे क्वचिन्नपुम् ।
सुतः पुत्रे सोमरसे सोमौ व्योमनिशाकरौ ॥ ६६ ॥
स्तूपा वायुरणोच्छ्राया आज्ञाह्वानाध्वरा हवाः ।
हर्तुर्मृत्यौ महारागे हरा रुद्राग्निगर्दभाः ॥ ६७ ॥
हंसोऽश्वेऽर्के हरे विष्णौ खगे निर्लोभभूभुजि ।
जीवे श्वेतवृषे भिक्षौ पार्ष्णिकाप्रसभौ हठौ ॥ ६८ ॥
वारिपर्णी च हेतुस्तु कारणे कर्मजन्मनोः ।
हीरस्सर्पे हरे सिंहे हेलिरालिंगने रवौ ॥ ६९ ॥

(इति भगवता यादवप्रकाशेन विरचितायां
वैजयन्त्यां द्व्यक्षरकाण्डे पुंलिङ्गाध्यायः)

## स्त्रीलिङ्गाध्यायः

अर्चा पूजाप्रतिमयोरार्तिश्चापाग्रपीडयोः ।
अन्दूस्तु शृंखला पादभूषाप्यष्ठी फलास्थ्यपि ॥ १ ॥
आस्था गोष्ठ्यां प्रतिज्ञायां तत्परत्वेऽवलंबने ।
आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः ॥ २ ॥
आलिस्सेतौ सखीपङ्क्त्योराशा दिगतितृष्णयोः ।
आजिस्समेऽपि भूभागे गोनाडीभूद्युवाक्ष्विडा ॥ ३ ॥
इलाप्येतासु चार्वे च स्यादिज्या यागपूजयोः ।
इष्टिस्स्पृहायजनयोरिरा भूवाक्सुरांबुषु ॥ ४ ॥
अन्ने च स्यादथो ईतिरुपसर्गप्रवासयोः ।
ईहा तु लिप्सोद्यमयोरूतिस्सूत्यभिरक्षयोः ॥ ५ ॥
ऊर्णा भ्रूमध्यगावर्ते तन्तौ मेषादिलोमसु ।
हिंसाविक्षेपयोः कीर्णिः कीर्तिः पंके यशस्यपि ॥ ६ ॥
कक्ष्या कच्छे वरत्रायां कांच्यां गेहप्रकोष्ठके ।
कर्मी हाटकपुत्र्यां स्यादपि शालापलालयोः ॥ ७ ॥
कासूर्बुद्धौ कुवाच्यस्त्रे कान्तिश्शोभाभिकामयोः ।
काष्ठोत्कर्षे सीम्नि दिशि क्षोण्यां वासे क्षये क्षितिः ॥ ८ ॥
क्रिया तु निष्कृतौ शिक्षाचिकित्सोपायकर्मसु ।
करणारंभपूजासु चेष्टायां संप्रधारणे ॥ ९ ॥
काले शिल्पे वित्तवृद्धौ चन्द्रांशे कलने कला ।
महाभूतेष्विन्द्रियेषु ज्ञानावयवयोरपि ॥ १० ॥
कोटिस्त्वश्रौ प्रकर्षेऽग्रे दशोपायगमे गतिः ।
गुप्तिः क्षितिव्युदासेऽपि गुञ्जा भाण्डेऽपि वादने ॥ ११ ॥



घृणा जुगुप्साकृपयोर्घोणापि रथकर्णिका ।
चिन्ताचर्चिक्ययोश्चर्चा चूर्णिर्ग्रन्थे कपर्दके ॥ १२ ॥
चापाग्रे पिष्टके चूलिश्छर्दिरुद्वान्तिरेतसोः ।
छाया त्वनातपे कान्तौ प्रतिबिंबार्कजाययोः ॥ १३ ॥
जनिर्वरस्त्रीपत्योश्च जामिस्स्वसृकुलस्त्रियोः ।
जातिश्छन्दसि मालत्यां सामान्ये जन्मगोत्रयोः ॥ १४ ॥
अलक्ष्म्यग्रजयोर्ज्येष्ठा गृहगोल्यृक्षभेदयोः ।
जिह्वा वाग्रसनार्चिष्षु तन्द्रा निद्राप्रमीलयोः ॥ १५ ॥
तन्त्रीर्गुडूचीसिरयो रज्वां वीणादिगे गुणे ।
तन्दूर्द्रोणिद्रवे दर्व्यां वाद्ये काले लवे त्रुटिः ॥ १६ ॥
तुला साम्ये स्तंभपीठे लेशसंशययोस्त्रुटिः ।
तूली शय्याकूर्चिकयोस्त्रेता त्वग्नित्रये युगे ॥ १७ ॥
दरदो भीतिहृद्रूढा दृष्टिर्धीदर्शनाक्षिषु ।
द्रोणी स्यादम्बुवाहिन्यां द्रवभाण्डे गिरिद्रवे ॥ १८ ॥
दिष्टिस्सुखे च दाने च धात्री भुव्युपमातरि ।
धनुस्सुस्त्रीधनुर्ज्यासु धाना बीजेऽपि भूरुहाम् ॥ १९ ॥
धारास्त्राग्रेऽबुसंतत्यां सैन्याग्रेऽश्वगतिष्वपि ।
धीता सुतायां बुद्धौ च धृतिस्सौख्येऽपि धारणे ॥ २० ॥
निष्ठोत्कर्षे व्यवस्थायां नाशेऽन्ते व्रतयज्ञयोः ।
भित्तिमूले प्रथौ नेमिर्निन्दा कुत्सापवादयोः ॥ २१ ॥
पालिरश्रिः प्रदेशोऽकस्सश्मश्रुः स्त्री त्सरुश्छदः ।
छन्दस्संख्यावली पङ्क्तिः पक्तिर्गौरवपाकयोः ॥ २२ ॥
क्षुद्रग्रामेऽपि पल्ली स्यात्प्रभार्चिषि च भासि च ।
प्रज्ञा प्राज्ञस्त्रियां बुद्धौ प्रजा तु जनपुत्रयोः ॥ २३ ॥
प्रसूर्जनन्यामश्वायां पारिस्सृणिगुणेऽपि च ।

पादुकोपानहोः पादूः प्राप्ती अभिगमोदयौ ॥ २४ ॥
पीडावमर्दरूपयोः प्रीतिः प्रेमप्रमोदयोः ।
प्रेक्षा नृत्तेक्षणे बुद्धौ बाधा दुःखनिषेधयोः ॥ २५ ॥
भसदौ गुह्यविट्कोष्ठौ भक्तिर्भागे निषेवणे ।
भिक्षा तु भिक्षितान्नादौ याच्ञायां भृतिसेवयोः ॥ २६ ॥
भूमिः क्षितौ स्थानमात्रे भूतिः श्रीजन्मभस्मसु ।
मतिः कांक्षा शेमुषी च मल्लिर्मृत्पात्रपीठयोः ॥ २७ ॥
माता तु गव्यकारादौ ब्राह्म्याद्यासु प्रसूमयोः ।
मूर्तिर्देहप्रतिमयोः काककाठिन्ययोरपि ॥ २८ ॥
पुंश्चल्यां मौक्तिके मुक्ता कारासंयमयोर्यतिः ।
गमने जीवने यात्रा रुजा रुग्भङ्गमृत्यवः ॥ २९ ॥
राजिः पङ्क्तौ राजसर्पे क्षेत्रेऽधो रसनस्य च ।
रीतिर्दग्धसुवर्णादिमले स्थित्यारकूटयोः ॥ ३० ॥
प्रचारे श्रवणे पङ्क्तौ रंडा स्यात् विधवापि च ।
रुचिः कान्त्यर्चिषोर्भासि तिंत्रिडीके स्पृहाश्रियोः ॥ ३१ ॥
रेटिर्विह्लेश्च रटितं वाणी चासंयतोत्कटा ।
रेखायामावलौ रेखा लङ्का पूर्भेदशाखयोः ॥ ३२ ॥
लीला क्रिया विलासश्च वपा गोण्डो विलं तथा ।
वलिर्मध्यगरेखोर्मिजीर्णत्वग्गृहदारु च ॥ ३३ ॥
वर्ध्री स्नायुनि नभ्रचां च व्रज्या पर्यटने गतौ ।
विधा विधाने हस्त्यन्ने भृत्यामृद्धिप्रकारयोः ॥ ३४ ॥
वीरुधौ गुल्मगुल्मिन्यौ वीथी पंक्त्यध्वनोरपि ।
वीचिः पंक्त्यूर्मिलेशेषु व्युष्टी फलसमृद्धते ॥ ३५ ॥
वृत्तिर्ग्रन्थाजीवयोश्च वेलाब्धिजलवर्धने ।
काले सीम्नि च वेणी तु केशबन्धे जलस्रुतौ ॥ ३६ ॥



वृद्धिस्सुखेऽपि जंघापि वारुश्शुक्तिस्तु दृग्रुजि ।
अश्वावर्ते च शाला तु गृहांगस्कन्धशाखयोः ॥ ३७ ॥
शक्तिः कासूर्बलं लक्ष्मीश्शरदावृतुवत्सरौ ।
शंका वितर्कभययोश्श्रद्धास्तिक्याभिलाषयोः ॥ ३८ ॥
शाखा वेदप्रभेदेषु बाहौ पादद्रुमांगयोः ।
श्यामा कन्या निशा चाथ शान्तिः प्रशममंगले ॥ ३९ ॥
शिखा ज्वालाकेकिमौल्योश्शिफा शाखाग्रमौलिषु ।
शुण्डा करिकरे मद्ये श्रुतिर्वेदे श्रवस्यपि ॥ ४० ॥
शय्या तल्पे ग्रन्थगुंफे शंसा तु स्तववाक्ययोः ।
संविद्युद्धे प्रतिज्ञायां संकेताचारनामसु ॥ ४१ ॥
संभाषणे क्रियाकारे विज्ञाने तोषणेऽपि च ।
सभा तु संसदि द्यूते गृहे सामाजिकेषु च ॥ ४२ ॥
संज्ञार्कभार्या चैतन्यं हस्ताद्यैरसूचनाभिधा ।
संस्था व्यवस्थाप्रणिधिसमाप्त्याकारमृत्युषु ॥ ४३ ॥
सन्धावधौ प्रतिज्ञायां सातिर्दानावसानयोः ।
सीमसीमे तु कूलेऽपि स्थानमर्यादयोस्स्थितिः ॥ ४४ ॥
गंगेष्टिमूर्वयोस्स्नुह्यां लेपभेदेऽमृते सुधा ।
रश्मिमेखलयोस्स्यूना सीता सस्ये हलाध्वनि ॥ ४५ ॥
स्थूणा सूर्म्यां गृहस्तंभे हिंसा चौर्यादिके वधे ।
हेलावज्ञाभावचारौ हेतिर्ज्वालांशुरायुधम् ॥ ४६ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
द्व्यक्षरकाण्डे स्त्रीलिङ्गाध्यायः)

नपुंसकलिङ्गाध्यायः

अभ्रं सलिलदे व्योमन्यस्त्रं कोदण्ड आयुधे ।
अग्रं पुरश्शिखामानशैष्ठ्याधिक्यफलेषु च ॥ १ ॥
मुष्के पक्ष्यादिकोशेऽण्डं दुःखैनोव्यसनेष्वघम् ।
अर्शसी व्याधिदुर्नाम्नी आज्ये श्रीवाससर्पिषी ॥ २ ॥
वर्षार्थजीवितेष्वायुरास्यं मुखविले मुखे ।
उरस्तु वक्षसि श्रेष्ठ ऋतं तथ्यसिलोंच्छयोः ॥ ३ ॥
ओजोऽवष्टंभबलयोरोकसी मंदिराश्रमौ ।
क्रियायजनयोः कर्म क्षीरं दोहजमंबु च ॥ ४ ॥
कुण्डं स्थाल्यां जलाधारविशेषेऽनलगर्तके ।
पिण्याको नग्नभूः किण्वं कूलं तीरे चमूकटौ ॥ ५ ॥
क्षेत्रं गृहे पुरे देहे केदारे योनिभार्ययोः ।
पुण्यस्थाने समूहे च घृतं त्वाज्येंऽबुसर्पिषोः ॥ ६ ॥
चक्रं सैन्ये जलावर्ते रथांगे चयराष्ट्रयोः ।
संसारे मण्डले वृत्ते छद्मभेदास्त्रभेदयोः ॥ ७ ॥
चैत्यं चितांके बुद्धाण्ड उद्देशेऽद्रौ सुरालये ।
चिह्नमंके पताकायां छद्म सद्मनि कैतवे ॥ ८ ॥
छन्दः श्रुतीच्छापद्येषु च्छिद्रं रंध्रापराधयोः ।
जालं गवाक्ष आनाये क्षारके कपटे गणे ॥ ९ ॥
जीलं चर्मपुटः कोशो दृतिः करकपत्रिका ।
ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्थाध्वरात्मसु ॥ १० ॥
तंत्रं स्वराष्ट्रव्यापारे तन्तुवाने परिच्छदे ।
शास्त्रौषधान्वमुख्येषु प्रयोगेऽध्वरकर्मणां ॥ ११ ॥



एकस्यैवोभयार्थत्वे कुडुंबव्यापृतावपि ।
तल्पं शय्याट्टजायासु तनुषी तनुविस्तृती ॥ १२ ॥
त्रपु सीसे च रंगे च तरसी बलरंहसी ।
तीर्थं मंत्राद्युपाध्यायशास्त्रेष्वंभसि पावने ॥ १३ ॥
पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयोः ।
तेजो बले प्रभावेऽन्ने ज्योतिष्यर्चिषि रेतसि ॥ १४ ॥
नवनीतेऽनले धर्मे दानं हस्तिमदेऽपि च ।
द्रव्यं गुणानामाधारे भेषजे योगवित्तयोः ॥ १५ ॥
द्वंद्वं युग्मं हिमोष्णादि मिथुनं कलहो रहः ।
धाम जन्मप्रभावान्नभास्सु स्वे भोजने गृहे ॥ १६ ॥
नेत्रं नाड्यां तरोर्मूले वस्त्रे दृशि मथो गुणे ।
नाट्यं तौर्यत्रिके नृत्ते नालं विवरशेपसोः ॥ १७ ॥
पदं स्थाने शरे त्राणे पादांके पादचिह्नयोः ।
शब्देंऽशुवस्तुवाक्येषु व्यवसायापदेशयोः ॥ १८ ॥
पर्व ग्रन्थौ पंचदश्यां प्रस्तावे विषुवादिके ।
पक्ष्म सूत्राद्यवयवे किंजल्के नेत्रलोमसु ॥ १९ ॥
पत्रं तु वाहने पर्णे क्षुरिकागरुतोरपि ।
पयोंऽभसि च दुग्धे च पाथसी सलिलौदनौ ॥ २० ॥
पात्रं तु भाजने योग्ये वित्ते कूलद्वयान्तरे ।
पाथींषि स्वर्गचंद्रार्काः पिंच्छं बर्हं खगच्छदे ॥ २१ ॥
पोत्रं मुखाग्रदेशे स्यात्सूकरस्य हलस्य च ।
नवनीतं पयः पीथं बर्हं पर्णशिखण्डयोः ॥ २२ ॥
बीजं शुक्ले फलास्थन्यन्ने भर्मणी स्वर्णवेतने ।
वणिङ्मूलधने पात्रे भाण्डं भूषाश्वभूषयोः ॥ २३ ॥

भाग्यं कर्मण्यन्यजन्मकर्मण्यपि शुभाशुभे ।
भर्गसी रेतआलोकौ महसी तेजउत्सवौ ॥ २४ ॥
माल्यं पुष्पे पुष्पदाम्नि मूल्यं वेतनवस्नयोः ।
मुखं तु वदने मुख्ये ताम्रे द्वाराभ्युपाययोः ॥ २५ ॥
मूलं वशीकृतौ स्वीये शिफातारान्तिकादिषु ।
गमने वाहने यानं रत्नं श्रेष्ठे मणावपि ॥ २६ ॥
रहो रहस्ये सुरते रिष्टं नाशे शुभेऽशुभे ।
रुक्मं हेम सुलोहं च रेतसी शुक्रमंबु च ॥ २७ ॥
रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ सितादिषु ।
सौन्दर्ये च स्वभावे च शरद्रेण्वार्तवे रजः ॥ २८ ॥
ललं पल्लव उद्याने लक्ष्म चिह्नवरिष्ठयोः ।
स्यादुपच्छन्दने लालं गुह्यार्थपरभार्ययोः ॥ २९ ॥
लिङ्गं शेफसि वेषेंऽशे चिह्ने बुद्ध्यादिसंहतौ ।
वयः खगेऽन्ने वर्षेऽर्थे शुभाकारे तनौ वपुः ॥ ३० ॥
वर्चोऽर्चीरूपविड्भास्सु वनं भास्यप्सु कानने ।
व्रतं विष्ण्वृतुवर्षेज्यातपोमासाग्निभुक्तिषु ॥ ३१ ॥
वीर्यं पराक्रमे रेतस्यन्नमाहात्म्ययोरपि ।
वेष्टं ब्रह्मणि नाके च शल्के शकलवल्कले ॥ ३२ ॥
शस्त्राण्यस्त्रमयश्शंसा शास्त्रं ग्रन्थनिदेशयोः ।
शार्ङ्गं चापे हरेश्चापे शीलं वृत्तस्वभावयोः ॥ ३३ ॥
शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ ।
शोचिश्शोकांशुपैंगल्यशुद्धत्वेषु सरोऽप्सु च ॥ ३४ ॥
यज्ञभेदे सदादाने सत्रमाच्छादने वने ।
सर्पिर्घृते च तोये च सान्त्वे दाक्षिण्यसान्त्वने ॥ ३५ ॥



स्नानीयेऽभिषवे स्नानं स्थानं स्यादाश्रये स्थितौ ।
सूत्रं तन्तौ संग्रहोक्तौ सुखमानन्दतोययोः ॥ ३६ ॥
स्रोतोऽम्बुनिर्गमद्वार इन्द्रियेऽप्सु जलस्रुतौ ।
हविर्हव्ये घृते तोये हेम्नी काञ्चनवेतने ॥ ३७ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
द्व्यक्षरकाण्डे नपुंसकलिङ्गाध्यायः)

---

### अर्थवल्लिङ्गाध्यायः

अर्थ्योऽर्थयुक्तात्मवतोरन्त्योऽन्त्यजनिकृष्टयोः ।
क्रूतेऽर्घायार्घ्यमर्घार्हेऽप्यदस्त्वत्र परत्र च ॥ १ ॥
अन्यौ विभिन्नासदृशावार्यस्साधुकुलीनयोः ।
आद्यमादिभवे भक्ष्येऽप्युत्पत्तिरहितेऽप्यृजुः ॥ २ ॥
मुख्यान्यकेवलेष्वेकः कष्टौ गहनदुःखितौ ।
कल्या नीरुग्दक्षसज्जा योग्ययुक्तहिताः क्षमाः ॥ ३ ॥
कटुस्तिक्ताप्रियाकार्यसुरभ्यूषणमत्सरे ।
क्रूरो भयंकरे क्रुद्धे नृशंसे कठिनोष्णयोः ॥ ४ ॥
गौरोऽरुणे सिते पीते गृह्यस्त्वस्वैरिपक्ष्ययोः ।
क्लिन्नास्ये क्लिन्ननेत्रे च चिल्लं चुल्लं च पिल्लवत् ॥ ५ ॥
चोद्यं चित्रे चोदनार्हे चारु चित्रवचस्यपि ।
जडो जाल्मश्च निर्बुद्धौ स्तब्धेऽनालोच्यकारिणि ॥ ६ ॥
ज्यायान् ज्येष्ठश्चाग्रजन्मन्यतिवृद्धातिशस्तयोः ।
जात्यःश्रेष्ठे कुलीने च डिंभो बालिशबालयोः ॥ ७ ॥
द्रुतं शीघ्रे शीघ्रगतेऽप्यवदीर्णविलीनयोः ।
दृढं गाढेऽधिके स्थूले धूतं त्यक्ते प्रकंपिते ॥ ८ ॥
धृष्णुर्धृष्टे प्रगल्भे च कुटिले बंधुरे नतम् ।
न्यक्षं कृत्स्ने निकृष्टे च निजमात्मीयनित्ययोः ॥ ९ ॥
नीचं खर्वे निकृष्टे च समर्थेऽधिपतौ प्रभुः ।
प्राप्तं न्याय्ये च लब्धे च विपुलानेकयोर्बहु ॥ १० ॥
बालो मूर्खे शिशौ भव्यो भावी योग्यश्शुभोऽपि च ।
मिश्रेऽपि भिन्नं म्लिष्टं तु म्लानाविस्पष्टवाक्ययोः ॥ ११ ॥



मुग्धं सौम्ये नवे मूढे मूढो मोहिनि तंद्रिते ।
मृद्वतीक्ष्णे कोमले च बद्धोपरतयोर्यतः ॥ १२ ॥
याप्यं गर्ह्ये यापनीये पृथक्संयुक्तयोर्युतम् ।
न्याय्यसंयुक्तयोर्युक्तं रूक्षो निष्प्रेम्ण्यचिक्कणे ॥ १३ ॥
रथ्यो रथहितेऽमुष्य स्वीयेऽस्याश्वे च वोढरि ।
रागवद्रोहितौ रक्तौ रामश्चारौ सितेऽसिते ॥ १४ ॥
न्याय्यलब्धव्ययोर्लभ्यं लिप्तो भक्षितदिग्धयोः ।
लघु त्वसारागुरुणोरिष्टे क्षिप्रमनोज्ञयोः ॥ १५ ॥
लोलं चले लोलुपे च व्यग्रो व्यापृत आकुले ।
वल्गु मंजौ च वामस्तु सौम्ये सव्यप्रतीपयोः ॥ १६ ॥
विद्धं विदारिते तुल्ये विन्नं लब्धे विचारिते ।
शितिश्श्वेते च नीले च शुभो मंजुप्रशस्तयोः ॥ १७ ॥
शुभ्रं शुक्ले भास्वरे च शुक्तं तु परुषाम्लयोः ।
सभ्यस्सामाजिके साधौ सव्यो दक्षिणवामयोः ॥ १८ ॥
सन्नमल्पे विशीर्णादौ स्वादुर्मधुरमृष्टयोः ।
स्फुटाः स्पष्टव्याप्तफुल्लाःस्थूलौ तु जडपीवरौ ॥ १९ ॥
मंत्रिण्यपि सुहृत्स्निग्धे प्रतिज्ञावत्यपि स्थितः ।
मंदस्वच्छन्दयोस्स्वैरो हीनो मुक्तविगर्ह्ययोः ॥ २० ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
द्व्यक्षरकाण्डे अर्थवल्लिङ्गाध्यायः)

---

## नानालिङ्गाध्यायः

नानालिङ्गेषु सर्वत्र स्वयमेव क्वचित्क्वचित् ।
उन्नेयमर्थवल्लिङ्गं गुणद्रव्यक्रियार्थकम् ॥ १ ॥
अक्षो रथांग आधारे व्यवहारे विभीतके ।
शकटे पाशके कर्षे द्यूतभेदेऽक्षमिन्द्रिये ॥ २ ॥
अब्जो धन्वन्तरौ शंखे चन्द्रे क्ली लवणेऽबुजे ।
प्रदेशेंऽश उपायेऽगमंगो देशेंऽगशालिनि ॥ ३ ॥
अविर्भूपुष्पवत्योस्स्त्री वायुप्राकारभास्सु ना ।
अजः पितामहेऽनादौ छागे विष्णौ हरे रवौ ॥ ४ ॥
अन्तोऽस्त्र्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके ।
नार्धमासेऽणिरक्षचश्रौ रूप्येऽक्षाग्रध्रुवे ध्रुवे ॥ ५ ॥
अर्हन्तौ जिनसम्मान्यावर्वन्तौ हयकुत्सितौ ।
अन्धोऽचक्षुस्तमोऽप्यन्धमर्चिर्भाज्वालयोर्न ना ॥ ६ ॥
अस्त्र आस्त्रश्च पुंलिगौ क्लेशे क्ली रुधिरेऽश्रुणि ।
आद्यो मुख्ये धातृपूर्वेष्वामोऽपक्केऽपि रुज्यपि ॥ ७ ॥
इनास्त्वात्माधिपार्काढ्या उष्णोऽग्नौ चतुरेऽपि च ।
उशिर्नाग्नावुशीरेऽस्त्री न नोषः कल्यसंध्ययोः ॥ ८ ॥
उस्रः किरण उस्रा गौर् ऋक्षंनिर्लोमनीन्द्रिये ।
कंब्वस्त्री वलये शंखे शंबूके कणसंख्ययोः ॥ ९ ॥
कल्को ना सिह्लके न स्त्री किट्टे दंभेऽघपिष्टयोः ।
कारा बन्धनगेहे स्त्री करे ना बन्धने न षण् ॥ १० ॥
कांस्यं कंसोऽस्त्रियां पानपात्रे तैजस आढके ।
काण्डोऽस्त्रीषौ बले नाले गर्ह्येऽवसरवर्गयोः ॥ ११ ॥



ग्रन्थौ स्तंबे प्रकाण्डेप्सु कश्यं मद्यकशार्हयोः ।
क्षुद्रो दरिद्रे कृपणे नृशंसेऽल्पानिकृष्टयोः ॥ १२ ॥
क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ।
कूटोऽस्त्री पुंजमायाघेष्वाद्रिशृंगेषुभेदयोः ॥ १३ ॥
अयोघनेऽनृते फाले दंभे निश्चलयन्त्रके ।
कृष्णं सीसाघलोहेषु कृष्णो नीले नले कलौ ॥ १४ ॥
शूद्रे काके पिके व्यासे ध्वान्तपक्षेऽर्जुने हरौ ।
कोशोऽस्त्री कुड्मले दिव्ये शास्त्रेऽर्थौघे गृहे तनौ ॥ १५ ॥
गुह्येऽण्डे वेष्टके पेश्यां पुस्तकासिपिधानयोः ।
कोलं बदरतक्कोलशुण्ठीव्योषेऽर्धकर्षके ॥ १६ ॥
कोला चव्येऽस्त्रपिप्पल्योः कोलः खंजे प्लवे किटौ ।
कायो लक्ष्ये तनौ बृन्दे पुमांस्त्रिषु कदैवते ॥ १७ ॥
कर्षूस्स्त्री तुषकोष्ठे कुल्यायां ना च ना करीषाग्नौ ।
श्रोण्यां भृशे किलिंजे गजगण्डे शवरथे शवे च कटः ॥ १८ ॥
किष्कुर्वितस्तावनपुं सप्रकोष्ठकरे पुमान् ।
कीलोऽक्ली कफणौ ज्वाले बाहौ ना शंकुशर्वयोः ॥ १९ ॥
पीठे श्मश्रुणि कूर्चोऽस्त्री भ्रूमध्ये कत्थने कुशे ।
कृत्या क्रियादेवतयोः कार्ये क्ली कुपिते त्रिषु ॥ २० ॥
युगेऽक्षपाते पर्याप्ते कृतं क्ली विहितेऽर्थवत् ।
क्ष्वेडा वेणुशलाकायां सिंहनादे विषे तु ना ॥ २१ ॥
क्षेमो ना प्राप्तरक्षायां मोक्षेऽप्यस्त्री तु मङ्गले ।
स्वीयेऽन्तःकुक्षि कोष्ठोऽस्त्री कुसूलेऽन्तर्गृहे पदे ॥ २२ ॥
क्रोडं क्ली कर्ष उत्सङ्गे सूकरे ना न नोरसि ।
औषधे रुजि कुष्ठोऽस्त्री कुञ्जोऽस्त्री गह्वरे हनौ ॥ २३ ॥

दर्भे कुशोऽस्त्री तोये क्ली कुटिर्वक्रे गृहे नषण् ।
कृष्टिर्विलेखे प्राज्ञे ना खेटो ग्रामे कफेऽधमे ॥ २४ ॥
अर्धे गुडविकारे च खण्डोऽस्त्री खण्डिते त्रिषु ।
खलं भूस्थानकल्केषु खलो नीचः खलेत्वरी ॥ २५ ॥
गव्यूतौ गोगणे गव्या ज्यायागद्रव्ययोर्नपुम् ।
भाण्डागारे पुमान् गञ्जस्स्त्री तु खन्यां सुरागृहे ॥ २६ ॥
गुडौ पिण्डेक्षुविकृती स्नुहीगुलिकयोर्गुडा ।
गुरुर्गीष्पतिपित्राद्योः पौरोहित्यकरे च ना ॥ २७ ॥
मात्रादौ स्त्री बृहत्ख्यातदुर्भरालघुषु त्रिषु ।
गोत्रा गोनिचये भूम्यां गोत्रं नाम्नि कुलेऽचले ॥ २८ ॥
गडुः पृष्ठगुडे कुब्जे गदो रोगो गदायुधम् ।
गोप्यो रक्ष्ये दाससुते घ्राणमाघ्रातनासयोः ॥ २९ ॥
घनाः कठिनसंघातमेघकाठिन्यमुद्गराः ।
चित्रा सुभद्रा तारा च चित्रमालेख्यमिश्रयोः ॥ ३० ॥
चेलं वासोऽक्षमं काम्यं गर्हितं बर्हिचन्द्रकः ।
चुम्रो नाशे विषण्णे च चोक्षो गीतमनोज्ञयोः ॥ ३१ ॥
छेको विदग्धे गृह्ये च जिह्मं मन्देऽघवक्रयोः ।
जन्यं रणे जनितरि विगीतजननीययोः ॥ ३२ ॥
ज्ञातिभृत्या नवोढाया जन्याः स्निग्धा वरस्य च ।
जीवः प्राणे त्रयी ना तु जन्तावात्मनि गीष्पतौ ॥ ३३ ॥
त्रिषु जीवति मौर्व्यां स्त्री स्याज्जीर्णो वज्रवृद्धयोः ।
झषा नागबलायां स्त्री ना मत्स्ये मकरे वने ॥ ३४ ॥
तनुः स्त्री त्वचि देहे च त्रिष्वल्पे विरले कृशे ।
तमो राहुस्तमोऽघं शुक् स्वरूपेऽधस्तलोऽस्त्रियाम् ॥ ३५ ॥



क्ली तुल्यदेशे तारस्तु मुक्ताशुद्धौ सुमौक्तिके ।
उडुदृङ्मध्ययोरक्ली तुच्छं त्वसुखशून्ययोः ॥ ३६ ॥
ताम्रं शुल्बे शुल्बनिभे तिग्मास्तीक्ष्णोष्णभास्कराः ।
तीक्ष्णमुष्णे क्षुते युद्ध आत्मत्यजि विषेऽयसि ॥ ३७ ॥
कर्णमूलेऽभ्रहरितोस्तोक्मं तोक्मो हरिद्यवः ।
दंडोऽस्त्री शासने राज्ञां हिंसायां लगुडे दमे ॥ ३८ ॥
मिथ्याज्ञायां सैन्यभेदे दलो भागे दलं छदे ।
दरोऽस्त्री शंखभीगर्तेष्वल्पार्थे त्वव्ययं दरम् ॥ ३९ ॥
दंष्ट्री ग्राहे सदंष्ट्रेऽहौ शार्दूले मूषिके किटौ ।
परिमाणे दारुपात्रे द्रोणोऽस्त्री वायसे पुमान् ॥ ४० ॥
दिग्धो विषप्रलिप्तेषौ लिप्ते स्नेहप्रवृद्धयोः ।
दुर्गो राष्ट्रे वने दुर्गं दुर्गमे नरके पुरे ॥ ४१ ॥
दृश्या स्यात् पृतना दृश्यं दर्शनीये विभूषणे ।
धर्मोऽस्त्री सुकृते साम्ये स्वभावे ना तु सोमपे ॥ ४२ ॥
न्यायाचारयमाहिंसास्वस्त्री मेढ्रांकयोर्ध्वजः ।
धिष्ण्यौ शुक्रानलौ धिष्ण्यमृक्षे स्थाने बले गृहे ॥ ४३ ॥
ध्रुवो धात्रीशकीलर्क्षनित्येषु स्त्री तु भूस्रुचोः ।
क्ली तर्के निश्चिते व्योम्नि धीरोऽब्धौ मंथरे बुधे ॥ ४४ ॥
निष्कोऽस्त्री हेम्नि दीनारे साष्टे कर्षशते पले ।
वक्षोविभूषणे कर्षे नाथस्त्विन्द्रे प्रभावपि ॥ ४५ ॥
न्युब्जं कुब्जे कर्मरंगे न्युब्जो व्याधावधोमुखे ।
नेमः पुरोहिते तुल्ये प्रस्थोऽस्त्री सानुमानयोः ॥ ४६ ॥
बंधने दूरमार्गे च प्राध्वं क्ली प्रवणे त्रिषु ।
पूर्वोऽर्थलिंगः प्राच्यादौ पूर्वजेषु नृभूमवान् ॥ ४७ ॥

पद्मोऽस्त्र्यब्जेऽष्टकायां क्ली संख्यायां गजबिंदुषु ।
ना तु नागे निधौ व्यूहे पंकोऽस्त्री कर्दमैनसोः ॥ ४८ ॥
परं दूरान्यमुख्येषु परोऽरिपरमात्मनोः ।
पार्ष्णिरुन्मत्तनार्यां स्त्री पादग्रंथेरधोऽपि च ॥ ४९ ॥
पुमांस्तु पृतनाकक्ष्यां पापं स्यात् क्रूरपाप्मनोः ।
पुण्यं धर्मे जले हेम्नि पुष्पे क्ली सुंदरेऽर्थवत् ॥ ५० ॥
पार्श्वमस्त्री समीपेऽपि पूज्यः श्वशुरमान्ययोः ।
स्नेहे केलौ प्रेम न स्त्री पीतिः पाने हये तु ना ॥ ५१ ॥
स्यात्परेत इव प्रेतो मृतप्राणिविशेषयोः ।
लाभनिष्पत्तिभोगेषु बीजे फाले धने फलम् ॥ ५२ ॥
फली ताम्रादिफलके बर्हिर्नाग्नौ नपुं कुशे ।
ब्रह्मा रुद्रेंद्रभृग्वादिविप्रर्त्विग्यज्ञधातृषु ॥ ५३ ॥
अर्केऽग्नौ क्ली तु वेदेऽन्ने स्वाध्यात्मात्मतपस्सु च ।
बलं रूपेऽस्थनि स्थौल्ये शक्तिरेतश्चमूषु च ॥ ५४ ॥
बलो रामे बलाढ्ये च बाढं त्वनुमते दृढे ।
बिंबोऽस्त्री मण्डलसमप्रतिमामुखलक्ष्मसु ॥ ५५ ॥
प्रतिबिंबे तत्प्रकृतौ क्ली तु स्याद्बिंबिकाफले ।
साज्ये मधुनि तक्कोले बोलं बोलोंऽभसां भ्रमः ॥ ५६ ॥
बोधिरर्थे सुविज्ञाने कुक्कुटाश्वत्थयोस्तु ना ।
बालोऽक्ली नीलझिण्ट्यां च भेलौ तूडुपभीरुकौ ॥ ५७ ॥
भगं योन्यां भगो यत्ने यशोवीर्यार्कभूतिषु ।
कान्तीच्छाज्ञानवैराग्यधर्मैश्वर्यतपस्सु च ॥ ५८ ॥
स्वादौ जन्तौ च भूतं क्ली समातीतोचिते त्रिषु ।
भास्वानिंदौ भास्वरेऽर्के भेको वर्षाभ्वि कातरे ॥ ५९ ॥



अन्नतत्परयोर्भक्तं भद्रं कल्याणसौख्ययोः ।
मन्दास्सरोगनिर्भाग्यस्वल्पाज्ञापटुसूर्यजाः ॥ ६० ॥
क्षौद्रादौ तद्रसेऽप्यस्त्री ना वसन्ते रसेऽसुरे ।
चैत्रे मधूके क्ली त्वप्सु मद्ये पुष्परसे मधु ॥ ६१ ॥
अक्ली मणिरजाकण्ठस्तने रत्नेऽप्यलिंजरे ।
मात्रा परिच्छदेऽर्थेंशे प्रवृत्तौ कर्णभूषणे ॥ ६२ ॥
अक्षरावयवे माने मात्रं कार्त्स्न्येऽवधारणे ।
मध्यं युक्तेऽन्तराले च महद्राज्यविशालयोः ॥ ६३ ॥
मोचा कदल्यां स्त्री वृक्षरसे ना पाटले नषण् ।
मौलिस्संयतकेशेषु चूडायां मकुटेऽप्यषण् ॥ ६४ ॥
मलं किट्टाघयोश्चास्त्री यमजान्तकयोर्यमः ।
ययुर्ना मोक्षमार्गेऽश्वे स्त्रीत्वाप्तौ दीर्घयष्टिके ॥ ६५ ॥
युगोऽस्त्री स्यन्दनाद्यंगे क्ली तु युग्मे कृतादिके ।
योनिस्त्रीणां भगे स्थाने कारणे ताम्रकेऽप्यषण् ॥ ६६ ॥
योग्यं यन्त्वक्षमापूपयानोपायिषु चन्दने ।
योग्याभ्यासः क्षमापुण्ये रोको रश्मौ बिले नपुम् ॥ ६७ ॥
राजते भूषणे रूप्यं रजते हेम्नि चाहते ।
त्रिषु प्रशस्तरूपेऽथ रणोऽस्त्री युधि ना ध्वनौ ॥ ६८ ॥
राष्ट्रोऽस्त्री विषये जन्तौ लोहोऽस्त्री तैजसायसोः ।
लक्षं नपुं शरव्ये ना स्त्री व्याजे नियुते न ना ॥ ६९ ॥
वर्णो नीलादिविप्राद्योः कीर्तौ गीतिक्रमे स्तुतौ ।
कुथे वृतेऽक्षरे त्वस्त्री प्रकारे लेपशोभयोः ॥ ७० ॥
वशा करिण्यां वन्ध्यायां रामायां दुहितर्यपि ।
वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः ॥ ७१ ॥

वरो ना रूपजामात्रोर्देवादेरीप्सिते वृतौ ।
त्रिष्वग्र्ये क्ली मनागिष्टे व्यक्तं स्पष्टे बुधे तु ना ॥ ७२ ॥
वत्सो ना कुटजे वर्षे तर्णके तनयादिके ।
बाले च वक्षसि त्वस्त्री वज्रोऽस्त्री हीरकास्त्रयोः ॥ ७३ ॥
व्याला दुष्टगजे सर्पे श्वापदे च पुमांस्त्रिषु ।
शठेऽथ वित्तमर्थे क्ली त्रिषु ख्याते विचारिते ॥ ७४ ॥
वीतं शान्ते दुर्गजाश्वे वधो हिंसितृहिंसयोः ।
वार्ता वार्तिगणोदन्तवाणिज्यादिषु वर्तने ॥ ७५ ॥
निस्सारारोग्ययोष्षण्डो वृत्तिमन्नीरुजोस्त्रिषु ।
वृत्तं स्वरूपे चरिते वृत्तौ छन्दोविधासु च ॥ ७६ ॥
त्रिष्वतीतदृढाधीतवर्तुलेष्वथ गीष्पतौ ।
श्रेष्ठोक्षाश्वाखुरेतस्सु पुन्धर्मेन्द्रबले वृषः ॥ ७७ ॥
वसुर्हृदेऽग्नौ योक्त्रेंऽशौ वसु तोये धने मणौ ।
विश्वं जगति सर्वस्मिंस्त्रिषु शुण्ठ्यां पुनर्न ना ॥ ७८ ॥
वप्रः पितरि ना न स्त्री क्षेत्रे रोधसि सानुनि ।
वर्षोऽस्त्री भारताद्यब्दवृष्टिषु प्रावृषि स्त्रियः ॥ ७९ ॥
वास्त्वस्त्री गृहभूपुर्योर्गृहे सीमसुरुंगयोः ।
वानं शुष्के गतौ व्यूतौ गन्धे वृद्धौ सुधीयमौ ॥ ८० ॥
वर्ष्म न स्त्री शुभाकारे सौम्ये देहप्रमाणयोः ।
विभुस्सर्वगते पत्यौ चन्द्रे रविकुबेरयोः ॥ ८१ ॥
वीरो राहौ हरे शक्रे शूरे स्कन्दकुबेरयोः ।
गजग्रहणभूमौ स्त्री वारिः स्यात्सलिले नपुम् ॥ ८२ ॥
शंखोऽस्त्री वलये कंबौ संख्यायां च निधौ तु ना ।
अमावस्यां च नागे च शितौ बाणतनूकृतौ ॥ ८३ ॥



शिवा हरीतकी क्रोष्टा शमी नद्यामलक्युमा ।
शिवो घोले पद्मरागे हरे कीले शिवं जले ॥ ८४ ॥
भद्रे चाथोपधा शुद्धा सचिवेऽग्नौ हरे शुचिः ।
चन्द्रेऽर्के च त्रिषु त्वेष शुद्धेऽनुपहते सिते ॥ ८५ ॥
शुक्रस्सिते कवौ चन्द्रे मासभेदेऽनले द्विजे ।
शुक्रं मेध्येऽप्सु पुण्येऽर्थे रुक्मेऽक्षिरुजि रेतसि ॥ ८६ ॥
क्रीडांबुयन्त्रे शृंगोऽस्त्री पर्वताग्रप्रभुत्वयोः ।
पश्वंगे चाथ शेषस्त्रिष्वन्यस्मिन्नुपयुक्ततः ॥ ८७ ॥
माल्याक्षतादिदाने स्त्री ना नागेशाप्रधानयोः ।
ना पर्याणे विहंगे स्त्री शारिर्द्यूते गुडे नषण् ॥ ८८ ॥
पथि देये शुल्कमस्त्री जामात्रा यच्च दीयते ।
श्रुतं शास्त्रावधृतयोर्नपुमाकर्णितेऽर्थवत् ॥ ८९ ॥
सजातिशिल्पिसंहत्यामषण्डः श्रेणिरावली ।
शौण्डी जलदमालायां शौण्डौ समदकुक्कुटौ ॥ ९० ॥
शको विष्ठा पशूनां स्याद्देशे च गवये शकाः ।
शबले मारुते शारश्शुद्धाः पूतार्ककेवलाः ॥ ९१ ॥
शुभ्रिर्नार्केऽर्थवत्सौम्ये शूरौ विक्रान्तकुक्कुटौ ।
शूलोऽस्त्री रुजि शस्त्रे च श्वेतं धवलरूप्ययोः ॥ ९२ ॥
शीतो ना वेतसे शेलौ शैत्ये क्ली तद्वति त्रिषु ।
सत्त्वोऽस्त्री जन्तुषु क्ली तु व्यवसाये पराक्रमे ॥ ९३ ॥
आत्मभावे पिशाचादौ द्रव्ये सत्तास्वभावयोः ।
प्राणे बलेऽन्तः करणे स्वामी पत्यौ षडानने ॥ ९४ ॥
समा स्त्री वत्सरे साधुसर्वतुल्येषु वाच्यवत् ।
परमार्थेऽर्थवत्सत्यं षण्डश्शपथतथ्ययोः ॥ ९५ ॥

स्पर्शस्संस्पर्शने स्प्रष्टर्युपतापप्रदानयोः ।
साधुस्त्रिषूचिते सौम्ये सज्जने वार्धुषौ पुमान् ॥ ९६ ॥
सारो बले स्थिरांशेऽर्थे पुमान्न्याय्ये वरेऽर्थवत् ।
स्त्री नद्यां ना नदे सिन्धुर्देशभेदेंऽबुधौ गजे ॥ ९७ ॥
सौम्यो विप्रे सोमजेऽब्दे सुन्दरे सोमदैवते ।
सखा सहाये बन्धौ ना सूक्ष्ममध्यात्मदभ्रयोः ॥ ९८ ॥
सूनं पुष्पे सुतायां स्त्री स्नेहोऽस्त्री द्रवहार्दयोः ।
विष्णुचन्द्रेन्द्रवातार्कयमाश्वांशुशुकाग्निषु ॥ ९९ ॥
कपिभेकाहिसिंहेषु हरिर्ना कपिले त्रिषु ।
हृद्यो वशीक्रिया मन्त्रे हृद्यं दध्न्यनुलेपने ॥ १०० ॥
हृत्प्रिये हृद्धिते हृज्जे ह्रीकौ नकुललज्जितौ ।
यमेऽल्पे वामने ह्रस्वो हरित् स्त्री दिशि षण् तृणे ॥ १०१ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
द्व्यक्षरकाण्डे नानालिङ्गाध्यायः)

---

(द्व्यक्षरकाण्डस्समाप्तः)

---



## अथ त्र्यक्षरकाण्डः

### पुंलिङ्गाध्यायः

अविनौ विहगाध्वर्यू अरत्नी हस्तकूर्परौ ।
अत्ययोऽतिक्रमे कृच्छ्रे मरणे दण्डदोषयोः ॥ १ ॥
आसारस्स्यात् प्रसरणे वेगवृष्टौ सुहृद्बले ।
आग्रहस्स्यात् स्वीकरणे निर्बन्धेऽनुग्रहेऽपि च ॥ २ ॥
आम्नायोऽध्ययने वेदे संप्रदाये कुलेऽपि च ।
आकर्षश्शारिफलको द्यूत आकृष्टिपाशकौ ॥ ३ ॥
गन्धमाल्योपहारे स्यादायोगो व्यापृतावपि ।
आनर्तो नृत्तशालायां देशभेदे जने युधि ॥ ४ ॥
आक्रन्दः क्रन्दने रावे नाथे घोररणेऽपि च ।
आधार आलवालेंऽबुबन्धेऽधिकरणेऽपि च ॥ ५ ॥
आशीरः क्षीरविकृतौ भोजने पावके रवौ ।
आवापो न्यास आवाले स्मरे धातरि चात्मभूः ॥ ६ ॥
श्रोण्याश्वारोह आकारस्त्वाकृतावात्मवैकृते ।
आमोदौ हर्षसौगन्ध्ये आभोगौ यत्नपूर्णते ॥ ७ ॥
आघातौ घातसीमानावाहारौ भक्षणान्धसी ।
आलोकौ दर्शनोद्योतावागमौ शास्त्रमागतिः ॥ ८ ॥
रुग्भीतितापेष्वातङ्क आशुगोऽर्के शरेऽनिले ।
तदात्वे पात आपात आकरो निकरे खनौ ॥ ९ ॥
अप्याकर्षणमाक्षेप आलंभस्स्पर्शहिंसयोः ।
ईशानौ हरिधातारावुत्सेधौ वपुरुन्नती ॥ १० ॥
उपाधिर्धर्मचिन्तायां कुडुंबव्यापृतेऽपि च ।

उत्सवस्त्विच्छाप्रसर उत्सेधामर्षयोर्महे ॥ ११ ॥
उदर्क उत्तरे काले यच्च स्यात्फलमुत्तरम् ।
उदान उदरावर्ते सर्पवायुप्रभेदयोः ॥ १२ ॥
ऊर्णायुरूर्णनाभे स्यान्मेषतल्लोमकंबले ।
ऋषभोऽग्र्ये मत्तगजे श्रोत्ररन्ध्रे स्वरे वृषे ॥ १३ ॥
कुंभीरपुच्छे च जलस्थाने त्वृक्षर ऋत्विजि ।
वेणौ द्रुमांगे रोमाञ्चे क्षुद्रशत्रौ च कण्टकः ॥ १४ ॥
कञ्चुकस्सर्पनिर्मोके कवचे वारवाणके ।
कलापो भूषणे कांच्यां संघाते बर्हतूणयोः ॥ १५ ॥
क्षारको मत्स्यपक्ष्यादिपिटके पुष्पजालके ।
दैवे कृतान्तस्सिद्धान्ते यमाकुशलकर्मणोः ॥ १६ ॥
कौशिको गुल्गुलूलूकशक्रर्षिष्वाहितुण्डिके ।
कलंकोऽङ्केऽपवादे च कलहो द्वन्द्वयुद्धयोः ॥ १७ ॥
कलमोऽङ्कुरलेखन्योः कठाकुः खगशिल्पिनोः ।
कारुजः कलभे नाके क्षवथुः क्षुतकासयोः ॥ १८ ॥
कर्परोऽग्रौ कपालेऽपि करभोऽपि खरोष्ट्रयोः ।
शरे किंशारुकादंबौ कुरण्डस्तु झषेऽपि च ॥ १९ ॥
कुटीरस्तु कुलीरेऽपि कुंभीलस्तस्करेऽपि च ।
कपोतः पारावतेऽपि कोकिलस्तूलमुकेऽपि च ॥ २० ॥
वायौ वसन्ते क्षिपणुः क्षिपणो वायुकालयोः ।
कुषाकुः पावके सूर्ये केसरी हयसिंहयोः ॥ २१ ॥
किंखिरौ क्रोष्टुखट्वाङ्गौ खेचरः पवनेऽपि च ।
खपुरः पूगवेष्टेऽपि पूगनिर्यासयोरपि ॥ २२ ॥
खोलकः पूगकोशे स्यात् भग्नभाण्डे शिरस्त्रके ।



गोलको मणिके पिण्डे कंबले विधवासुते ॥ २३ ॥
अन्तराभवसत्त्वे स्याद्गन्धर्वो गायने हये ।
गरुत्मान्विहगे तार्क्ष्ये वृषार्केन्द्रेषु गोपतिः ॥ २४ ॥
चङ्कुरस्स्यन्दने दैत्ये चाक्रिकौ तैलघाण्टिकौ ।
चिकिरोऽहौ गेहबभ्रौ जसुरिः पावके शनौ ॥ २५ ॥
जंबुकौ क्रोष्टुवरुणौ जंबालौ पंकशैवलौ ।
श्वेतस्तिलोऽपि जामाता जीमूतौ मेघपर्वतौ ॥ २६ ॥
जगलो मेदके पिष्टमद्येऽपि कितवेऽपि च ।
जनिमा मातापितरावुत्पत्तिस्तनयोऽपि च ॥ २७ ॥
त्रिवर्गस्त्रिफला व्योषं स्थितिवृद्धिक्षया अपि ।
तमोनुदोऽग्निचन्द्रार्कास्तक्षकौ नागवर्धकी ॥ २८ ॥
तपनो भास्करे ग्रीष्मे त्रिदिवो व्योम्नि दिव्यपि ।
त्रिशंकू तार्क्ष्यमार्जारौ त्रिधामा केशवेऽनले ॥ २९ ॥
सपिण्डपुत्रौ दायादौ द्वापरौ युगसंशयौ ।
दिवौकाश्चातके देवे द्रुघणौ धातृमुद्गरौ ॥ ३० ॥
दरथो विवरे भीत्यां दिक्षु चापि प्रसारणे ।
द्विजातिश्च द्विजन्मा च ब्राह्मणादिपतत्रिणोः ॥ ३१ ॥
द्रुहिणौ हरिधातारौ शास्त्रोदाहरणयोस्तु दृष्टान्तः ।
दोषज्ञौ बुधभिषजौ धरुणाः स्तनधातृलोकार्काः ॥ ३२ ॥
धाराटश्चातकेऽश्वे च नभसौ व्योमसागरौ ।
निवेशौ शिबिरोद्वाहौ निरोधौ रोधसंक्षयौ ॥ ३३ ॥
निदेशावाज्ञाकथने निग्रहस्सीम्नि भर्त्सने ।
निवहो वायुभेदेऽपि निषङ्गस्तूणसंगयोः ॥ ३४ ॥
ऊर्णाविकारे नमतो धूमे दिनकरेऽपि च ।

निगमो निश्चये वेदे पुरे पथि वणिक्पथे ॥ ३५ ॥
नितंबः पश्चिमश्रोणिभागेऽद्रिकटके कटौ ।
निष्क्रमो बुद्धिसामर्थ्ये निर्गतौ चाथ भूपतौ ॥ ३६ ॥
नरेन्द्रो विषवैद्ये च नैगमस्तु श्रुतावपि ।
निकारस्तु तिरस्कारे धान्यस्योत्क्षेपणेऽपि च ॥ ३७ ॥
द्वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके ।
निषधोऽद्रौ देशभेदे कठिने तस्य राजनि ॥ ३८ ॥
निह्नवस्स्यादविश्वासेऽपह्नवे निकृतावपि ।
निर्वेशस्सम्मूर्छने स्यात् कर्मभृत्युपभोगयोः ॥ ३९ ॥
प्रतिज्ञायन्त्रणाज्ञासु नियमो निश्चये व्रते ।
पतंगश्शलभे शालौ मार्जारेऽग्नौ रवौ खगे ॥ ४० ॥
परिधिर्यज्ञिये काष्ठे प्राकारे परिवेषणे ।
परिघाते मूढगर्भे परिघोऽर्गलदण्डयोः ॥ ४१ ॥
परागः पुष्परेणौ च स्नानीयादौ रजस्यपि ।
पर्जन्यो गर्जदभ्रेऽभ्रध्वाने शक्रेऽस्त्रयन्त्रके ॥ ४२ ॥
प्रलयो मरणे श्लेषे मूर्छासंवर्तयोरपि ।
प्रवहो वायुभेदे स्याद्वायुमात्रे बहिर्गतौ ॥ ४३ ॥
प्रयोगो ग्राम्यधर्मे स्यात् कुसीदे कर्मणां विधौ ।
प्रणयस्स्यात् परिचये याच्ञायां सौहृदेऽपि च ॥ ४४ ॥
प्रवाहस्तु प्रकृष्टाश्वे जलवेगे प्रवर्तने ।
पादपः पादपीठे स्यात् पादयाने द्रुमेऽपि च ॥ ४५ ॥
पिण्याकस्सिह्लके किण्वे श्रीवासतिलकल्कयोः ।
पुरुषो धातृपुन्नागपुंस्त्वात्मपरमात्मनोः ॥ ४६ ॥
पुलकोऽस्त्रे रत्नराज्यां रोमांचे हीरके क्रिमौ ।



पुलाकस्तुच्छधान्ये स्यात् संक्षेपे भक्तसिक्थके ॥ ४७ ॥
प्रसवो जननानुज्ञापुत्रेषु फलपुष्पयोः ।
पारंपर्ये प्रसंगेऽपि प्राणिनां गर्भमोचने ॥ ४८ ॥
तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहः पुनः ।
तयोश्च संयमोद्योतपूजाबन्द्यगर्वधेषु च ॥ ४९ ॥
प्रभवस्स्यादपां मूले विक्रमे जन्मकारणे ।
आद्योपलब्धिस्थाने च पुद्गलो देह आत्मनि ॥ ५० ॥
प्रत्ययस्तु ख्यातिरन्ध्रविश्वासाधीनहेतुषु ।
विज्ञाने शपथे शब्दे प्रस्तरोऽश्मा मणिः कुशः ॥ ५१ ॥
पर्यस्त्यामपि पर्यंकः प्रकोष्ठोऽलिन्दकेऽपि च ।
गजस्कन्धेऽपि पणवः प्रघणौ लोहमुद्गरौ ॥ ५२ ॥
प्रियकः कृकलासेऽपि पेचकस्त्वचि हस्तिनाम् ।
पुच्छमूले प्रपातस्तु पाते रोधसि सौप्तिके ॥ ५३ ॥
पदाजिर्युधि मार्गे च रक्षोवृक्षौ पलाशिनौ ।
प्रतिघौ रुट्प्रतीघातौ प्रतापौ पौरुषातपौ ॥ ५४ ॥
प्रसादौ स्वाच्छ्यानुरोधौ पर्यायोऽवसरे क्रमे ।
प्रदोषौ दोषरात्र्यंशौ प्रणिधिः प्रार्थने चरे ॥ ५५ ॥
वरुणेऽनले प्रचेताः प्रतापमाहात्म्ययोः प्रभावस्स्यात् ।
भेदसमते प्रकारौ विपर्यये विस्तरे प्रपञ्चस्स्यात् ॥ ५६ ॥
रुग्भङ्गबाणाः प्रदराः श्रेष्ठोक्षाणौ तु पुङ्गवौ ।
पिशाचौ सत्त्वमार्जारौ पिचण्डः कुक्षिशय्ययोः ॥ ५७ ॥
पृथुकश्चिपिटे बाले पृदाकुर्व्याघ्रसर्पयोः ।
भासन्तावर्कनक्षत्रे सूर्यश्चाग्निश्च भास्करौ ॥ ५८ ॥
भ्रातृव्यौ भ्रातृजामित्रौ भुरण्यू विष्णुभास्करौ ।

भूमिस्पृशौ वैश्यनरौ भुवन्यौ वह्निभास्करौ ॥ ५९ ॥
भूतात्मा पवने देहे यश्च कर्ता तनौ पुमान् ।
राजभेदाहिमार्जारश्वार्कशुक्रेषु मण्डली ॥ ६० ॥
धुर्तूरे सर्पभेदे च मातुलो मदनः पुनः ।
सिक्थे वसन्ते धुर्तूरे कन्दर्पेऽप्यथ माधवः ॥ ६१ ॥
विष्णौ वसन्ते वैशाखे मरूकौ भेककेकिनौ ।
मिहिरा वायुमेघार्का यज्वरौ तु हयाध्वरौ ॥ ६२ ॥
युञ्जानस्सारथौ विप्रे रभसो विषवेगयोः ।
रक्ताक्षौ रक्षोमहिषौ रमती स्वर्गमन्मथौ ॥ ६३ ॥
रुचको भूषणे दन्ते रुवथः कुक्कुटे ध्वनौ ।
वश्वथः कोकिले काले वर्तकोऽश्वखुरे खगे ॥ ६४ ॥
व्यवायो मैथुनेऽन्तर्धौ चित्रे दर्पे च विस्मयः ।
वाहसौ वह्वचजगरौ द्रुप्रवालौ तु विद्रुमौ ॥ ६५ ॥
विस्रंभौ स्नेहविश्वासौ विबुधौ सुरपण्डितौ ।
विकारौ रोगविकृती विष्किरौ शिखिकुक्कुटौ ॥ ६६ ॥
रहःप्रकाशौ वीकाशौ विपाकस्स्वेदपाकयोः ।
विश्वात्मार्केऽपि विष्कंभो विस्तारप्रतिबन्धयोः ॥ ६७ ॥
स्पर्धायां पौरुषे व्यामे व्यायामोऽथ परिक्रमे ।
विहारस्सौगतावासे क्रीडायाश्चाथ विग्रहः ॥ ६८ ॥
युद्धे देहे विस्तरे च कुशमुष्टौ च विष्टरः ।
विभ्रमस्संशये भ्रान्तौ शोभायां चाथ वालुका ॥ ६९ ॥
विकीर्णोऽर्थश्च विकिरौ विसर्गौ मुक्तिवर्चसी ।
विनयो धर्मविद्याधीशिक्षाचारप्रशान्तिषु ॥ ७० ॥
विवधो वीवधश्च द्वौ पर्याहारेऽध्वभारयोः ।



वृत्तान्तस्स्यात् प्रकरणे कार्त्स्न्ये वार्ताप्रकारयोः ॥ ७१ ॥
वासरौ नागदिवसौ वैकुण्ठाविन्द्रकेशवौ ।
विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ॥ ७२ ॥
शपथः कर आक्रोशे शपने च सुतादिभिः ।
बालके शिशुमारे च शिशुकोऽथाध्वरे पशौ ॥ ७३ ॥
अध्वर्यौ च श्रपाय्यस्स्याच्छकुन्तौ भासपक्षिणौ ।
कक्ष्यान्तरेऽपि शुद्धान्तश्श्वशुर्यौ स्यालदेवरौ ॥ ७४ ॥
मन्त्री सहायस्सचिवस्सहुरी वृषभास्करौ ।
स्यमीकौ वृक्षवल्मीकौ समीकौ मिथुनार्णवौ ॥ ७५ ॥
सरण्यू वायुजलदौ संस्तरौ प्रस्तराध्वरौ ।
क्षये रोधे च संरोधस्संवर्तोऽब्दे जगत्क्षये ॥ ७६ ॥
संघर्षौ घर्षणं स्पर्धा शरखड्गौ तु सायकौ ।
समिकौ वृक्षवल्मीकौ सृदाकू व्याघ्रपावकौ ॥ ७७ ॥
सविता सारथौ रुद्रे पितर्यर्के सुजातिभिः ।
सन्निवेशे गणे गेहे संस्त्यायस्संग्रहाः पुनः ॥ ७८ ॥
स्वीकारोच्छ्रायसंक्षेपास्संभ्रमोऽत्यादरे भये ।
संभवो जन्मसंहत्योराधारानतिरेचने ॥ ७९ ॥
आधेयस्याथ संभोगो भोगे करिकरे रते ।
प्रत्यक्षे सन्निधाने च सन्निधिस्स्थपतिः पुनः ॥ ८० ॥
स्थापत्येऽधिपतौ तक्ष्णि बृहस्पतिसवी च यः ।
समाधिर्ध्याननीवाकप्रतिज्ञासु समर्थने ॥ ८१ ॥
सन्नयस्समवाये च पृष्ठस्थायिबलेऽपि च ।
समयस्तु क्रियाकारे संकेते चरिते सताम् ॥ ८२ ॥
सिद्धान्ते शपथे काले स्वाध्यायो जपवेदयोः ।

सारसो विहगे चन्द्रे हिमारिः पावके रवौ ॥ ८३ ॥
हर्यक्षो धनदे सिंहे व्रीह्यब्दार्चिष्षु हायनः ।
महोदरेपि हेरंबो हरिमा मृत्युरोगयोः ॥ ८४ ॥

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
त्र्यक्षरकाण्डे पुंलिङ्गाध्यायः)

---



## स्त्रीलिङ्गाध्यायः

अमनिः पशुवंक्षण्यां जलपात्रे च दारवे ।
अदितिश्शैलकन्यायां पृथिव्यां देवमातरि ॥ १ ॥
अभिख्या त्विड्यशोनामस्वंबिका मातुलान्युमा ।
अमतिर्मरणे मोहेऽप्याकारे देह आकृतिः ॥ २ ॥
आयतिर्दीर्घतायां स्यात् प्रभावागामिकालयोः ।
उपधा सुपरीक्षापि कृपाण्यामपि कर्तरी ॥ ३ ॥
कल्पना समर्थनापि कषिके सस्यमक्षिके ।
कणिका तिलकाण्डेंऽशे गोधूमे तस्य चूर्णके ॥ ४ ॥
कारिका यातनायां स्याच्छ्लोके विवरणे कृतौ ।
कूर्चिका मस्तुपिण्डेऽपि सूचितूलिकयोरपि ॥ ५ ॥
तुर्येंऽशे मानदण्डस्य माषस्यापि च काकणी ।
विंशतौ च कपर्दानां पादुकैककपर्दयोः ॥ ६ ॥
गृहिणी कांचिकं जाया देहली गृहकारिका ।
वेश्याकरिण्योर्गणिका वेष्टनेऽपि च गोलका ॥ ७ ॥
पार्श्वा कालेऽपि घटिका रथ्यायामपि चत्वरी ।
जुगुप्सा निन्दाघृणयोर्जननी करुणांबयोः ॥ ८ ॥
जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयोः ।
छत्रान्तालंबिवस्त्रेऽपि झछरी केशवाद्ययोः ॥ ९ ॥
चापे तृणत्वे तृणता दारिद्र्येऽपि च दुर्गतिः ।
पद्माकरेऽब्जे नलिनी स्वास्थ्ये नाशे च निर्वृतिः ॥ १० ॥
निवृत्तिस्तु मनस्तोषे मोक्षेऽस्तमयबाढयोः ।
नालिका चुल्लिकारन्ध्रे विवरे वेणुभाजने ॥ ११ ॥

नाले काले देशमाने नियतिस्संयमे विधौ ।
प्रकृतिः पंचभूतेषु स्वभावे मूलकारणे ॥ १२ ॥
छन्दःकारणगुह्येषु जन्त्वमात्यादिमातृषु ।
पक्षतिर्गरुतो मूले द्वयोः प्रतिपदोरपि ॥ १३ ॥
अधिकारे प्रकारे च प्रक्रियोत्पादनेऽपि च ।
गृहादिधिष्ण्ये पिण्डे च जंघामांसे च पिण्डिका ॥ १४ ॥
परीष्टिर्मार्गणे भक्तौ पङ्क्तौ पथि च पद्धतिः ।
प्रतिष्ठे स्थितिमाहात्म्ये प्रतती ततिवीरुधौ ॥ १५ ॥
बोधे तिथौ च प्रतिपत् प्रवृत्तिर्वृत्त्युदन्तयोः ।
प्रवेणी तु कुथावेण्योः प्रसूतिः पुत्रजन्मनोः ॥ १६ ॥
पाताली वागुरा स्थाली बन्धकी तु करिण्यपि ।
बृहती पद्यवार्ताक्योः कण्टकार्यां च वाचि च ॥ १७ ॥
भित्तिका तु शतावर्यां वज्रे चाप्यथ मेखला ।
श्रोणिस्थानेऽद्रिकटके कटिबन्धेऽसिबन्धने ॥ १८ ॥
महिषी पशुराट्पत्न्यो मर्यादा सीम्नि धारणे ।
पेटा पुरी च मञ्जूषा मनाका कामिनी गजी ॥ १९ ॥
गव्यृक्षे रेवती देव्यां शुक्लायां रजनी निशि ।
रोचना रक्तकल्हारे गवां पित्ते वरस्त्रियाम् ॥ २० ॥
पथ्यायां गव्युमाकन्यालोहिनीषु च रोहिणी ।
नक्षत्रे कण्ठरोगे च वर्तनी वृत्तिमार्गयोः ॥ २१ ॥
विपणिस्तु निषद्यापि वालुकोर्मिश्च वालुका ।
वडबा स्त्रीविशेषेऽपि वाशिता करिणीस्त्रियोः ॥ २२ ॥
वसतिस्तु निशि स्थित्यां जैनानामाश्रमे गृहे ।
वाणिनी तु विदग्धायां नर्तक्यां मत्तयोषिति ॥ २३ ॥



वीणा विपञ्ची सैवालपदण्डा सा नवतन्त्रिका ।
वृषल्यृतुमती कन्या शूद्रा वन्ध्या मृतप्रजा ॥ २४ ॥
वनिता स्निग्धनार्योश्च नार्याश्चाप्यथ वेदिका ।
वेदिश्चांगुलिमुद्रा च काञ्ची छन्दश्च शक्करी ॥ २५ ॥
शष्कुल्यपूपभेदेऽपि शिञ्जिनी नूपुरज्ययोः ।
शर्करा तु शिलाभेदे रुग्भेदाल्पकपालयोः ॥ २६ ॥
शर्करावत्प्रदेशेषु सितायां शकले गुडे ।
समितिः परिषत्स्थाने युद्धे संसदि संगमे ॥ २७ ॥
सन्ततिस्त्वन्ववाये स्यात् पारंपर्ये सुतेऽपि च ।
संहिता वर्णसंयोगे शास्त्रवेदैकदेशयोः ॥ २८ ॥
सिद्धौ स्वभावे संसिद्धिर्वाञ्छानुज्ञा च सम्मतिः ।
संवित्ती ज्ञानसंवादौ ह्लादिन्यौ वज्रविद्युतौ ॥ २९ ॥
हरिणी हरिता पाण्डुस्सुवर्णप्रतिमा मृगी ।

---

(इति भगवता यादवप्रकाशेन विरचितायां
वैजयन्त्यां त्र्यक्षरकाण्डे स्त्रीलिङ्गाध्यायः)

---

नपुंसकलिङ्गाध्यायः

अयनं निलये मार्गे सूर्योदग्दक्षिणागतौ ।
अंशुकं केवले वस्त्रे सूक्ष्मवस्त्रोत्तरीययोः ॥ १ ॥
अभीक्ष्णमव्ययं वा स्यात् पौनःपुन्यभृशार्थयोः ।
अरुलं सलिले पोते प्यलीकं त्वप्रियेऽनृते ॥ २ ॥
अनूकमन्वये शीलेऽप्यास्पदं स्थानकृत्ययोः ।
स्तंभमात्रेऽपि चालानं हस्तिनोंऽसेऽपि चासनम् ॥ ३ ॥
रेतसीन्द्रियमक्षे च दर्शनेऽक्षणि चेक्षणम् ।
उद्यानं संग्रहोद्गत्योर्वनभेदे प्रयोजने ॥ ४ ॥
उत्थानमुद्यमे वास्तौ तन्त्रेहापौरुषेषु च ।
उद्धानमुद्गमे चुल्ल्यामौशीरे दण्डचामरे ॥ ५ ॥
कटीरं कन्दरे कट्यां कलत्रं श्रोणिभार्ययोः ।
क्रन्दनं रुदिते ध्वाने कार्मुकं शस्त्रचापयोः ॥ ६ ॥
कारणं हेतुवधयोः कारकं हिंसकेऽपि च ।
कीलालं रुधिरे तोये कुहरं गह्वरे बिले ॥ ७ ॥
कुरीरं ग्राम्यधर्मेऽब्जे कुन्नानं कुण्डशिक्ययोः ।
कैतवं कपटे द्यूते कूपीटमुदरे जले ॥ ८ ॥
करणं कारणे काये साधने ववकादिषु ।
स्पृष्टाद्युच्चारणाभेदध्यानपद्मासनादिषु ॥ ९ ॥
रतबन्धे नाट्यभेदे गीतके कर्मणीन्द्रिये ।
कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले ॥ १० ॥
कामे ख्याते मंगले च हस्तसूत्रेऽपि कंकणम् ।
कटित्रं चर्म सुस्यूतं कटीवेष्टनचर्म च ॥ ११ ॥



कोदण्डं तु चतुर्हस्तं धनुर्वेणुर्धनुर्धरः ।
केतौ तु केतनं चापे कृत्यार्थोपनिमन्त्रणे ॥ १२ ॥
कौलीनं प्राणिभिर्द्यूते कुलीनत्वापवादयोः ।
गुह्येऽकार्ये च कौपीनं गन्धनं तु प्रकाशने ॥ १३ ॥
सूचनेऽपि च हिंसायां परस्योत्साहनेऽपि च ।
ग्रहणं बन्दिरादानमादरोऽर्काद्युपप्लवः ॥ १४ ॥
गह्वरं कन्दरे दंभे चलनं पादयन्त्रयोः ।
जघनं स्यात् कटौ पूर्वश्रोणिभागापरांगयोः ॥ १५ ॥
तलिमं कुट्टिमे तल्पे तर्पणं त्विन्धनेऽपि च ।
तानितं तूलितपटे गुणवादित्रभाण्डयोः ॥ १६ ॥
तेमनं व्यञ्जने क्लेदे तोत्रे तोदे च तोदनम् ।
दर्शनं चक्षुषि स्वप्ने बुद्धिशास्त्रोपलब्धिषु ॥ १७ ॥
दुकूलं शुक्लवस्त्रेऽपि द्योतनं दीपनेऽक्ष्णि च ।
धाराग्रमवतारेऽश्रौ निमित्तं हेतुलक्षयोः ॥ १८ ॥
नाभीलं नाभिगन्धश्च वंक्षणं च वरस्त्रियाः ।
निर्याणं हस्तिनेत्रान्ते मरणे निर्गमेऽपि च ॥ १९ ॥
निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने ।
निदानमपदाने स्यात् खण्डनेऽप्यादिकारणे ॥ २० ॥
पललं तिलचूर्णे स्यान्मांसकर्दमभेदयोः ।
प्रयाणं गजदृक्पूर्वप्रदेशे मरणे गतौ ॥ २१ ॥
प्रज्ञानं लाञ्छने बुद्धौ प्रसूनं फलपुष्पयोः ।
पातालं लोक और्वश्च पतत्रं खे गरुत्यपि ॥ २२ ॥
नवसूतगवीदुग्धे पीयूषममृतेऽपि च ।
प्रमाणं बोधनेयत्तामर्यादाशास्त्रहेतुषु ॥ २३ ॥

*

सम्यग्वक्तरि चाथ स्यात् प्रायणं मरणे गतौ ।
पुष्करं हस्तिहस्ताग्रे जले वाद्यमुखे युधि ॥ २४ ॥
खेऽब्जे दिव्यसिधारायां तीर्थभेषजभेदयोः ।
ब्राह्मण्यं ब्राह्मणत्वे स्याद्विप्रौघे विप्रकर्मणि ॥ २५ ॥
बाह्लीकं कुंकुमं हिंगु भण्डनं कवचे रणे ।
भूतिकं भूमिनिंबे च भूस्तृणे कत्तृणेऽपि च ॥ २६ ॥
मणीचमग्रहस्तेऽपि पुष्पमौक्तिकयोरपि ।
मन्दिरं देहपुर्योश्च संबन्धे मैथुनं रते ॥ २७ ॥
यापनं स्यान्निरसने नृत्ते प्रस्थापनेऽपि च ।
लक्षणं कार्षिके चिह्ने नाम्नि मुद्रांगसंपदोः ॥ २८ ॥
लांगूलं वालधौ मेढ्रे वर्जनं त्यागहिंसयोः ।
वरांगं स्त्रीभगे मूर्ध्नि च्छेदे वृद्धौ च वर्धनम् ॥ २९ ॥
व्यञ्जनं श्मश्रुनिष्ठानचिह्नेष्ववयवेऽक्षरे ।
वृद्धत्वे वृद्धसंघाते वृद्धकर्मणि वार्द्धकम् ॥ ३० ॥
वालकं त्वंगुलीये स्यात् बर्हिष्ठे वलयेऽपि च ।
व्युत्थानं प्रतिकूलत्वे स्वातन्त्र्यकरणेऽपि च ॥ ३१ ॥
व्यसनं शक्तिविपदोर्दैवानिष्टफलेऽहसि ।
पैशुन्यादौ च कोपोत्थे मृगयादौ च कामजे ॥ ३२ ॥
विधानं हस्तिकबले प्रेरणेऽभ्यर्चने धने ।
वेतने चाप्युपाये च प्रकारे वैरकर्मणि ॥ ३३ ॥
वेष्टने मकुटोष्णीषौ शकले खण्डवल्कले ।
शालूकं पंकजे कन्दे जले शमलमप्यघे ॥ ३४ ॥
शासनं निग्रहे लेख्ये वेदवाक्येषु कर्मणि ।
वाङ्नियोगे प्रहरणे शास्त्रे ग्रामे च निष्करे ॥ ३५ ॥



साधनं शेफसि धने सिद्ध्युपायनिवृत्तिषु ।
मारणे मृतसंस्कारे दापनेऽनुगमे गमे ॥ ३६ ॥
सेनांगे यातनायाश्च सेवनं स्यूतिसेवयोः ।
मृत्यौ समाधौ संस्थानं सन्निवेशे चतुष्पथे ॥ ३७ ॥
मणौ शीथौ शीधुपाने सरकं मद्यभाजने ।
सामर्थ्ये शक्तिसंबन्धौ हृदयं तु मनस्यपि ॥ ३८ ॥
हिरण्यं काञ्चने वित्ते मानभेदेऽप्यकुप्यके ।
हरणं करपो नृत्ते चापेनान्यास्त्रवारणे ॥ ३९ ॥
हृतौ क्वथितशीताप्सु पणने यौतकादिके ।

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
त्र्यक्षरकाण्डे नपुंसकलिङ्गाध्यायः)

अर्थवल्लिङ्गाध्यायः

अधमौ गर्हितन्यूनावभीकौ निर्भयाभिकौ ।
प्रत्यक्षेऽधिकृतेऽध्यक्षमखिलं गर्ह्यकृत्स्नयोः ॥ १ ॥
आविद्धौ क्षिप्तकुटिलावादृतौ सादरार्चितौ ।
विपन्नप्राप्तावापन्नावाभीलौ कष्टभीषणौ ॥ २ ॥
आप्लुतौ स्नातकस्नातावाहतं गुणिते हते ।
आयस्तः कुपिते क्षिप्ते क्लेशिते तेजितेऽपि च ॥ ३ ॥
इरिणं तूषरस्थाने भूभागे च निराश्रये ।
उदारो महति ख्याते दक्षिणे दानशौण्डके ॥ ४ ॥
उद्धृतं भुक्तनिर्मुक्ते तुलिते चाप्यथोच्छ्रितम् ।
वृद्धे तुङ्गे समुत्पन्नेऽप्युदितौ कथितोद्गतौ ॥ ५ ॥
उदूढावूढपृथुलावुत्तमौ प्रवरान्तिमौ ।
महत्युदात्त उच्चोक्तेऽप्युपोढो निकटोढयोः ॥ ६ ॥
अभ्यस्तेऽप्युचितं न्याय्येऽप्युषितं स्थितदग्धयोः ।
उत्तालो द्रुत उत्तानेऽप्युत्कटो मत्त उद्भटे ॥ ७ ॥
करालो दन्तुरे तुंगे विशाले विकृतेऽपि च ।
कर्कशः प्रखरस्पर्शे निर्दये साहसिन्यपि ॥ ८ ॥
द्वौ कनिष्ठकनीयांसौ यून्यत्यल्पेऽनुजेऽपि च ।
क्षुल्लका नीचनिस्स्वाल्पाः कलितौ ज्ञातबद्धयोः ॥ ९ ॥
कल्माषौ कृष्णमिश्रौ च कुहकोऽपीर्ष्यया युते ।
क्षेत्रियं दुष्प्रतीकारे व्याधौ क्षेत्रोद्भवे तृणे ॥ १० ॥
देहान्तरचिकित्सार्हे गरले पारदारिके ।
चतुरौ दक्षधीमन्तौ जघन्योऽन्त्यकुपूययोः ॥ ११ ॥



जरठः कठिने जीर्णे तलिनो विरलाल्पयोः ।
पशुः कालेऽपि निश्शृंगो नरोऽश्मश्रुश्च तूपरौ ॥ १२ ॥
दुर्विधो निर्धने नीचे निहतो न्यक्स्वरे हते ।
निर्ग्रन्थश्श्रमणे निस्स्वे निरस्तस्तु निराकृते ॥ १३ ॥
निष्ठ्यूते प्रास्तवान्ते च वचने च द्रुतोदिते ।
निवातो दृढसन्नाहे निर्वातेऽप्याश्रयेऽपि च ॥ १४ ॥
निर्दयः परदोषोक्तिपरे निष्ठुरभाषिणि ।
प्रणाय्योऽसम्मतेऽपि स्यादनभिष्वंगवत्यपि ॥ १५ ॥
प्रतीतो भूषिते ख्याते ज्ञाते प्रत्ययिते बुधे ।
प्रार्थितं त्वभियुक्ते स्यान्निहिते याचितेऽपि च ॥ १६ ॥
पिण्डिलः स्थूलजंघे च गणनाकुशलेऽपि च ।
प्रतीक्ष्यौ प्रतिपाल्यार्च्यौ प्रथमौ प्रवरादिमौ ॥ १७ ॥
प्रहतौ क्षुण्णव्युत्पन्नौ प्रयतौ पूतसंस्कृतौ ।
सव्यायत्तौ प्रसव्यौ द्वौ प्रवृद्धौ प्रसृतैधितौ ॥ १८ ॥
पिण्डितौ घनसंख्यातौ प्रसिद्धौ ख्यातभूषितौ ।
पेशलौ चारुचतुरौ पूर्णश्रेष्ठौ तु पुष्कलौ ॥ १९ ॥
मिश्रास्निग्धौ च परुषौ प्रगाढो गहने दृढे ।
पामरोऽपशदेऽज्ञे च बालिशो बालमूर्खयोः ॥ २० ॥
बीभत्सौ क्रूरविकृतौ बहलौ सान्द्रपुष्कलौ ।
बन्धुरौ नम्रसुन्दरौ भंगुरौ वक्रनश्वरौ ॥ २१ ॥
भावितौ लब्धवासितौ भुजिष्यौ स्वैरिकिङ्करौ ।
मधुरौ स्वादुसुन्दरौ मूर्च्छितौ मूढसोच्छ्रयौ ॥ २२ ॥
विधुतौ त्यक्तकंपितौ विदितौ ज्ञातसंश्रुतौ ।
विलीनौ लीनविद्रुतौ वेल्लितौ धूतकुञ्चितौ ॥ २३ ॥

विगतौ वीतनिस्पृहौ विविक्तौ शुद्धनिर्जनौ ।
विवर्णौ मूर्खदुर्वर्णौ व्यायतो व्यापृते दृढे ॥ २४ ॥
विकृतौ रोगिदूरूपौ विशदो धवले शुचौ ।
वल्लभौ दयिताध्यक्षौ वरिष्ठोऽतिवरेऽत्युरौ ॥ २५ ॥
पृथौ कराले विकटो विसृतं विगते तते ।
वदान्यो वल्गुवाग्दात्रोर्वरीयान् सत्तमेऽत्युरौ ॥ २६ ॥
विवशस्त्वस्वतन्त्वात्माप्यरिष्टेन च दुष्टधीः ।
विधुरः पत्न्यपेते स्यात् क्लिष्टविश्लिष्टयोरपि ॥ २७ ॥
संस्कृतं लक्षणोपेते कृत्रिमे निर्मलीकृते ।
मिश्रीकृते च संसृष्टं शुद्धे च वमनादिभिः ॥ २८ ॥
साधीयोऽनुमतेऽत्यर्थं सत्तमे शोभनेऽपि च ।
तथ्यपथ्यार्थवाक्येऽपि सूनृतोऽथ क्षमे हिते ॥ २९ ॥
संबद्धेऽपि समर्थस्स्यात् स्तिमितं स्तंभवत्यपि ।

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
त्र्यक्षरकाण्डे अर्थवल्लिङ्गाध्यायः)

---



## नानालिङ्गाध्यायः

गुणाद्यर्थेऽर्थलिङ्गत्वमिहाप्यूह्यं स्वयं क्व चित् ।
अन्तरः परिधानीये बाह्ये स्वीयेऽन्तरात्मनि ॥ १ ॥
क्ली तु मध्येऽवकाशे च तादर्थ्येऽवसरेऽवधौ ।
विशेषविवरान्तर्धिष्ववसानविनार्थयोः ॥ २ ॥
अक्षरोऽसौ हरौ धातर्यक्षरं प्रणवे विधौ ।
धर्मे वर्णे तपःक्रत्वोः खे मोक्षे मूलकारणे ॥ ३ ॥
अनन्तो नागराड्विष्णुरनन्तं खनिरन्तयोः ।
अनन्ता पूर्णिमा दूर्वा यवाषश्शारिबा मही ॥ ४ ॥
अर्जुनः पाण्डवे पाण्डौ मातुरेकसुते द्रुमे ।
नेत्ररोगे चार्जुनं तु तृणे हेम्न्यर्जुनी गवि ॥ ५ ॥
विषारुणारुणं ताम्रमरुणस्सूर्यसारथौ ।
अव्यक्तरागे शशिजे सन्ध्याभ्रे लोहिते रवौ ॥ ६ ॥
अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने ।
अयाचिते जले जग्धौ मोक्षेऽन्ने हेम्नि गोरसे ॥ ७ ॥
क्लीबो ना त्वमरे स्त्री तु गुलूच्यां मद्यभिक्षयोः ।
आमलक्यां हरीतक्यां त्रिषु तु स्वादुनित्ययोः ॥ ८ ॥
अरिष्टो वायसे निंबे गोरसे निरुपद्रवे ।
क्ली तु वर्ण्ये मृत्युचिह्ने मद्ये ताम्रे शुभेऽशुभे ॥ ९ ॥
अंगजो ना सुतेऽनंगे क्ली रोगे रुधिरेऽपि च ।
न ना कवाटे क्ली लोहे सोमे स्यादररः पुमान् ॥ १० ॥
लाजेष्वभ्योषमभ्योषास्साज्यांभःपेयसक्तवः ।
कृकलासेंऽडजो मत्स्ये खगे कस्तूरिकाण्डजा ॥ ११ ॥
अविषो निर्विषेंऽभोधावविषी दिवि पुंसि वा ।

अपानो देहजो वायुरपानं वृषणे गुदे ॥ १२ ॥
प्रधानेऽव्यक्तमव्यक्तो ब्रह्मण्यस्पष्टमूर्खयोः ।
अमरेन्द्रपुरी स्थूणा गुडूची चामरास्तुराः ॥ १३ ॥
क्लचक्षतं तण्डुले धान्ये न ना लाजेषु ना यवे ।
अजिरं जर्जरे कामे विषयांकणयोर्द्रुते ॥ १४ ॥
अलसौ पादरुङ्मन्दावण्डीरौ शक्तपूरुषौ ।
विद्युत्पव्योरक्लचशनिरनीकोऽस्त्री चमूयुधोः ॥ १५ ॥
अधरोऽनूर्ध्वहीनोष्ठेष्वनृतं वितथे कृषौ ।
आश्रमोऽस्त्री मुनिस्थाने ब्रह्मचर्यादिके मठे ॥ १६ ॥
कोष्ठारे कृपणे जीर्णे स्थानेऽभिप्राय आशयः ।
शर्करायां दृषत्पुत्रे स्त्र्यस्त्र्यश्मन्युपलो मणौ ॥ १७ ॥
उत्तरं प्रतिवाक्ये स्यादुदीच्ये प्रवरोर्ध्वयोः ।
स्त्रीलिङ्गत्वे धनुर्लक्ष्म्यां पुरुषे पावके च ना ॥ १८ ॥
करीरो ना घटे न स्त्री पादपे वैणवांकुरे ।
करेणुस्तु करिण्यां स्त्री कर्णिकारे गजे च ना ॥ १९ ॥
भिक्षापात्रे तु कमठं कमठौ खर्वकच्छपौ ।
अस्त्री कशिपु शय्यायां वस्त्रेऽन्ने तद्द्वयेऽपि च ॥ २० ॥
करटो दुर्दुरूटे स्याद्धिल्वे काकेभगण्डयोः ।
कल्याणी क्ष्मोमयोः क्ली तु मंगलेऽक्षयरुक्मयोः ॥ २१ ॥
रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे ।
कान्तार इक्षुभेदे ना न स्त्री व्यध्वे महावने ॥ २२ ॥
कीनाशो रक्षसि यमे कदर्ये कर्षकेऽर्थवत् ।
कुहनो मूषिके सेर्ष्ये कुहना दंभशीलता ॥ २३ ॥
कुशलं निपुणे पुण्ये पर्याप्तौ मंगले क्षमे ।
कुकूलं शंकुभिः कीर्णे श्वभ्रे ना तु तुषानले ॥ २४ ॥



कुण्डली चित्रलमृगे सर्पे कुण्डलवत्यपि ।
कुंकुमे महारजने कुसुंभं ना कमण्डलौ ॥ २५ ॥
केवलं निश्चिते क्लीबे वाच्यवच्चैककृत्स्नयोः ।
कमलं छुरिकादीनां हेमाद्यैश्चित्रिताजिने ॥ २६ ॥
रक्ताब्जेऽब्जेऽप्सु च श्रीस्तु कमला कमलो मृगः ।
अक्ली कोल्यां क्रोष्टुकोल्यां कर्कन्धूस्स्त्री तु संयुगे ॥ २७ ॥
तथा मध्वाज्यसंसिक्तयवलाजजतर्पणे ।
कुमारस्स्याद्गुहे बाले वरणेऽश्वानुचारके ॥ २८ ॥
युवराजे च ना क्ली तु द्वीपे पुंस्त्री मृगोमयोः
कुतपो भागिनेयेऽर्के विप्रेऽग्नावतिथौ गवि ॥ २९ ॥
अस्त्री त्वह्नोऽष्टमे भागे तिलेषु छागकंबले ।
दर्भे च केसरस्त्वस्त्री सिंहकेशाश्वकेशयोः ॥ ३० ॥
कलिलं गहने बृन्दे सैन्येऽपि कटकोऽस्त्रियाम् ।
किञ्जल्कः केसरे खे क्ली कृषकौ फालकर्षकौ ॥ ३१ ॥
कातरः पण्डके त्रस्तौ क्षेत्रज्ञावात्मशिक्षितौ ।
कुसीदमृणवृद्धौ क्ली वाच्यवद्वृद्धिजीविनि ॥ ३२ ॥
कलिङ्गं तु यवे ना तु देशपक्षिविशेषयोः ।
खनको भूमिवित्तज्ञे मूषिकेऽप्यवदारके ॥ ३३ ॥
गर्जितो मत्तमातङ्गे क्ली तन्नादेऽबुदध्वनौ ।
गण्डूषोऽस्त्री गण्डपूर्तौ प्रसृते गजपुष्करे ॥ ३४ ॥
पार्थचापे चापमात्रे गाण्डीवो गाण्डिवोऽस्त्रियौ ।
कशेरुहेम्नोर्गांगेयं गांगेयो गुहभीष्मयोः ॥ ३५ ॥
ग्रामणीस्स्वामिनि श्रेष्ठे ग्रामेशे नापिते तु ना ।
गोमुखोऽस्त्री वाद्यभेदे नक्रे नाले वने नपुम् ॥ ३६ ॥
गोष्पदं गोखुरश्वभ्रे मानगोगम्ययोरपि ।

वृत्तैकभक्ते चरणे चरणा बह्वृचादयः ॥ ३७ ॥
स्थण्डिले प्रांगणे च क्ली चत्वरं ना चतुष्पथे ।
चातुरश्शकटे चक्रगण्डे नयनगोचरे ॥ ३८ ॥
चपलः पारदे शीघ्रे दुर्विनीते चले कपौ ।
चले केशे च चिकुरो जराय्वस्त्र्यंबुजेऽपि च ॥ ३९ ॥
जृंभितं जृंभणोत्फुल्लविवृद्धेषु विचेष्टिते ।
जीवकः प्रवरे जन्तौ श्रमणे वृद्धिजीविनि ॥ ४० ॥
जर्जरस्त्रिषु जीर्णे स्यात् पुमानिन्द्रध्वजे पिके ।
टगरष्टंगनक्षारे नाकेकरदृशि त्रिषु ॥ ४१ ॥
स्त्री नौनद्योर्व्रजस्तंभे तरणिर्नार्णवे रवौ ।
भुवीन्द्रपुत्र्यां तविषी ताविष्यब्धिदिवोर्नरौ ॥ ४२ ॥
तमिस्रा स्त्री ध्वान्तनिशि निश्यन्धतमसे न ना ।
तातगुश्शूद्रताते ना ताताय तु हिते त्रिषु ॥ ४३ ॥
तातलो लोहकूटे ना त्रिषु तप्ते मनोजवे ।
तरलो भास्वरे हारे चञ्चलेऽप्यथ तारका ॥ ४४ ॥
न नाक्षिमध्ये नक्षत्रे द्विजिह्वौ सूचकोरगौ ।
दुर्वर्णं दुष्प्रभे रूप्ये देयभेदे तु दक्षिणा ॥ ४५ ॥
त्रिष्ववाक्सरलावामेष्वन्यच्छन्दानुवर्तिनि ।
कनिष्ठपत्न्यामरतौ पुनर्भूपरिविन्नयोः ॥ ४६ ॥
स्त्री पुनर्भ्वास्तु पत्यौ ना दिधिषुर्दिधिषूरपि ।
स्याद्दीपकमलंकारे स्वरूपे दीप्तिमत्यपि ॥ ४७ ॥
दुन्दुभिः पुंसि भेर्यां स्त्री त्वक्षबिन्दुत्रिकद्वये ।
धर्षणं सुरते धार्ष्ट्ये कुलटायां तु धर्षणी ॥ ४८ ॥
चारौ श्रेष्ठे वृषे श्वेते धवलो धवली गवि ।
धौतांचले रजक्याश्च धावनी धावनं गतिः ॥ ४९ ॥



धिषणा स्त्री धियां गौर्यां स्त्रीचिह्ने ना तु गीष्पतौ ।
नागरं पुरजे चुक्रे शुण्ठीराजकशेरुणोः ॥ ५० ॥
निधनोऽस्त्री कुले नाशे निस्त्रिंशः क्रूरखड्गयोः ।
नालीकमब्जे बाणे ना निशान्तं गृहशान्तयोः ॥ ५१ ॥
केशादिशौक्ल्ये पलितं शैलेये ना तु कर्दमे ।
पटलं दृग्रुक्छदिषोः क्ली न ना पिटके गणे ॥ ५२ ॥
पर्याप्तं स्याद्यथाकामे तृप्तौ शक्तौ निवारणे ।
प्रवणो दक्षिणे प्रह्वे क्रमनिम्ने चतुष्पथे ॥ ५३ ॥
प्रकाशोऽर्चिषि दीधित्यां ना तुल्यस्फुटयोस्त्रिषु ।
मुखे प्रतीकस्त्रिषु तु प्रतिकूलानुरूपयोः ॥ ५४ ॥
वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे ।
प्रसूनमर्थवज्जाते पुष्पे क्ली सारथौ पुमान् ॥ ५५ ॥
प्रग्रीवमस्त्री कलशे ग्रीवाप्रासादयोरपि ।
पाटला गवि पाटल्यामाशुव्रीहिस्तु पाटलः ॥ ५६ ॥
पिनाकोऽस्त्री रजोवर्षे शूले शंकरधन्वनि ।
त्रिषूर्ध्वबाहुपुंमात्रे क्ली पुंसो भावकर्मणोः ॥ ५७ ॥
पौरुषं पल्लवं त्वस्त्री प्रकोष्ठेऽप्यतिविस्तृतौ ।
पवित्रोऽग्नौ हरौ पूते क्ली तु ताम्रेऽप्सु गोमये ॥ ५८ ॥
मन्त्रे दध्नि ब्रह्मसूत्रे हेम्न्यर्थे कलशे कुशे ।
पुलस्त्यवंश्ये पुरुषे पौलस्त्यः क्ली तु संयुगे ॥ ५९ ॥
फलकी चन्दने स्त्री न स्त्री दार्वासनचर्मणोः ।
फेनिलं बदरे फेनयुक्तेऽथ ब्राह्मणो द्विजे ॥ ६० ॥
आत्मज्ञे क्ली तु विधिवद्वेदभागतदंशयोः ।
बहुलः कृष्णपक्षेऽग्नौ पुमांस्त्रिष्वसिते बहौ ॥ ६१ ॥
स्त्री स्यात्पृथिव्यामुस्तायामेलायां कृत्तिकासु च ।

भविलं भवने भव्ये भ्रमरः कामुकेऽलिनि ॥ ६२ ॥
उद्याने मलयं ना तु गिर्यंशगिरिभेदयोः ।
मत्सरोऽन्योदयद्वेषे तद्वत्कृपणयोस्त्रिषु ॥ ६३ ॥
मन्थरस्सूचके कोपे मन्थाने मन्दगामिनि ।
मार्गणं मृगणायां स्यान्मार्गणो याचके शरे ॥ ६४ ॥
दूर्वायां स्त्रीक्षुमूले क्ली गोरसेऽपि च मोरटम् ।
त्रिलिङ्गं मण्डलं बृन्दे ग्रामौघप्रतिबिंबयोः ॥ ६५ ॥
उपसूर्ये कुष्ठरोगे देशे द्वादशराजके ।
मुचिरौ धर्मदातारौ मोदकौ खाद्यहर्षकौ ॥ ६६ ॥
पित्रादेः कन्ययाप्तेऽर्थे क्ली स्वीये त्रिषु यौतकम् ।
युतकं युगले युक्ते यौतके वसनाञ्चले ॥ ६७ ॥
संश्रयेऽग्रे च शूर्पस्य वस्त्रभेदे च योषितः ।
रसनं क्ली कषायेऽन्ने द्रवे स्नेहे विषे फले ॥ ६८ ॥
निर्यासे हेम्नि रूप्ये च जिह्वास्वादनयोर्न ना ।
रेवटं दक्षिणावर्तशंखे रेणौ तु रेवटः ॥ ६९ ॥
वातूले विषवैद्येऽथ रजतं शोणिते ह्रदे ।
श्वेते हारेऽप्यथोष्ट्रेऽलौ रवणश्शब्दनेऽर्थवत् ॥ ७० ॥
रोषाणो रोषणे स्वर्णघर्षणग्राव्णि पारदे ।
रौहिषं रक्तकत्तृणे मत्स्यभेदे मृगे च ना ॥ ७१ ॥
लालसा तु न नौत्सुक्ये दौहृदाद्यभिलाषयोः ।
ललामोऽस्त्री ललामापि प्रभावे पौरुषे ध्वजे ॥ ७२ ॥
श्रेष्ठे भूषापुण्ड्रशृंगपुच्छचिह्नाश्वलिंगिषु ।
लोचको मांसपिण्डे स्यान्नीलिन्यां चर्मणि भ्रुवि ॥ ७३ ॥
रक्तांशुके दुष्टबुद्धौ क्रोष्टुधूर्तौ तु वञ्चकौ ।
विनीतस्त्रिष्वपि प्राप्ते निभृते विजितेन्द्रिये ॥ ७४ ॥



विनयं ग्राहिते चैष सुखवाहिहये पुमान् ।
विषयी राज्ञि कन्दर्पे विषयस्थजने च ना ॥ ७५ ॥
अर्थवद्विषयोपेत इन्द्रिये तु नपुंसकम् ।
अस्त्री वितानमुल्लोचे विस्ताराध्वरयोः क्षणे ॥ ७६ ॥
त्रिषु शून्ये च मन्दे च विषाण्युक्षेभशृंगिषु ।
भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे न षण् ॥ ७७ ॥
वयस्स्थामलकीपथ्याब्राह्मीषु तरुणे त्रिषु ।
वलजा वरनार्यां च क्षेत्रे द्वारि च सा न ना ॥ ७८ ॥
वर्णकोऽस्त्री प्रकारे स्याच्चन्दने स्त्र्यङ्गलेपने ।
दुःखे विलक्षे व्यलीकमप्रियाकार्ययोस्तु ना ॥ ७९ ॥
वातूलो वातसंघाते वातले मरुतोऽसहे ।
विहायाः पुंनपुं व्योम्नि पुमानेव पतत्रिणि ॥ ८० ॥
विशिखा तु खनित्री च क्ली चित्ते ना त्वसौ शरे ।
विमानोऽस्त्री देवयाने सप्तभूमे च सद्मनि ॥ ८१ ॥
विटपोऽस्त्री द्रुविस्तारे पल्लवे स्तंबशाखयोः ।
विषाणस्त्रिषु लिङ्गेषु पश्वङ्गगजदन्तयोः ॥ ८२ ॥
वेदना दुःखानुभवे ज्ञाने च स्त्रीनपुंसकम् ।
स्कन्दे विशाख ऋक्षे स्त्री विहासस्स्फुटहासयोः ॥ ८३ ॥
पापेऽपि व्रजिनं केशे पुमानिन्दुस्तु शर्वरः ।
स्त्री रात्रिसन्ध्याशर्वर्यो दैत्ये ना शंबरोऽप्सु षण् ॥ ८४ ॥
शयधुस्त्रिषु निद्रालौ मृत्यावजगरे च ना ।
शय्यायां शयनं न स्त्री निद्रासुरतयोर्नपुम् ॥ ८५ ॥
शरत्पक्वादिशालीनौ प्रत्यग्रोऽब्जश्च शारदः ।
गंभार्यां कट्फले श्रीपर्ण्यग्निमन्थाब्जयोर्नपुम् ॥ ८६ ॥
यमेऽपि शमनो ध्वान्ते क्ली हिंस्रे त्रिषु शार्वरः ।

करञ्जभेदे षट्ग्रन्थषट्ग्रन्था ग्रन्थिकं वचा ॥ ८७ ॥
समानः प्राणभेदे ना त्रिष्वेकसमसाधुषु ।
संस्कारो ना संस्कृतिस्स्त्री संकल्पप्रतियत्नयोः ॥ ८८ ॥
स्पर्शनः पवमाने स्यात् स्पर्शनं स्पृष्टिदानयोः ।
सारंगश्शबलो वर्णश्चातकष्षट्पदो मृगः ॥ ८९ ॥
छिद्रे छिद्रान्विते वाद्ये सुषिरं सुषिरो नडः ।
सुमनाः पुष्पमालत्योस्स्त्री देवबुधयोः पुमान् ॥ ९० ॥
सैन्धवोऽश्वेऽश्वभेदे ना न स्त्री तु लवणोत्तमे ।
बदरेऽपि च सौवीरं ना नीवृद्रोपचोण्टयोः ॥ ९१ ॥
संगरो ना क्रियाकारे प्रतिज्ञाविपदोर्युधि ।
शमीफले तु षण्डोऽथ संबाधौ योनिसंकटौ ॥ ९२ ॥
सुरभिर्वाच्यवत् सौम्ये सुगन्धौ स्त्री त्वसौ गवि ।
पुमांश्चैत्रे वसन्ते च सेवकौ स्यूतभाजकौ ॥ ९३ ॥
सुकृतं शोभने धर्मे हर्षुलो मृगकामिनोः ।

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
त्र्यक्षरकाण्डे नानालिङ्गाध्यायः)

---

(त्र्यक्षरकाण्डस्समाप्तः)

---



## अथ शेषकाण्डः

### पुंलिङ्गाध्यायः

अकारादिक्रमेणादाविहोक्त्वा चतुरक्षरान् ।
अध्यायान्तेषु संकीर्णाः कृताः पञ्चाक्षरादयः ॥ १ ॥
अनुबन्धो दोषभावे प्रकृत्यादेर्विनश्वरे ।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥ २ ॥
अपहारः पुनश्चोरे द्यूतयुद्धादिविश्रमे ।
निमन्त्रणोण्नेतव्यद्रव्ये ग्राहाख्ययादसि ॥ ३ ॥
अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके ।
अवष्टंभस्समालंभे स्तब्धिकांचनयोरपि ॥ ४ ॥
पिशाचादिग्रहे तीर्थेऽप्यवतारोऽवतारणे ।
अवरोहोऽवतरणं शाखाप्याग्राद्रतांघ्रितः ॥ ५ ॥
अधिवासो निवासे स्यात् गन्धधूपादिसंस्कृतौ ।
अपवर्गः क्रियासाद्ध्यफलाप्तौ त्यागमोक्षयोः ॥ ६ ॥
अपभ्रंशोऽपशब्दे स्यात् भाषाभेदप्रपातयोः ।
अपदेशस्तु लक्षे स्यान्निमित्तव्याजयोरपि ॥ ७ ॥
अनुभावः प्रभावे स्यान्निश्चये भावसूचके ।
पश्चात्तापे त्वनुशयो दीर्घद्वेषानुबन्धयोः ॥ ८ ॥
अनुषंगस्तु कारुण्ये प्रकृतस्यानुवर्तने ।
अभिमानस्तु विज्ञाने प्रणये दर्पहिंसयोः ॥ ९ ॥
अभिषंगस्त्वभिभवे संग आक्रोशनेऽपि च ।
अभिहारोऽभियोगे च चौर्यसन्नाहयोरपि ॥ १० ॥
स्नाने मद्यस्य सन्धानेऽभिषवस्सवनेऽपि च ।

अभिग्रहोऽभियोगे च समन्ताद्ग्रहणेऽपि च ॥ ११ ॥
संयुगे स्यादभिमरस्सबलादपि साध्वसे ।
कुले त्वभिजनो जन्मभूमौ चाथामरे झषे ॥ १२ ॥
अनिमेषोऽप्यनिमिषोऽप्यथ चण्डालशिष्ययोः ।
स्यादन्तेवास्यथर्वज्ञे त्वथर्वाणिः पुरोहिते ॥ १३ ॥
नृपरक्षिष्वनीकस्थो हस्तिशिक्षाविचक्षणे ।
अपवादौ तु निन्दाज्ञे स्तुतिस्नेहावपह्नवौ ॥ १४ ॥
वह्निवातावपांगर्भौ गुह्यगूधाववस्करौ ।
कूर्मेशेऽब्धावकूपारोऽवलेपो लेपगर्वयोः ॥ १५ ॥
अशिरस्कौ बाहुरुण्डाववलोर्णोऽस्फुटापि वाक् ।
आशोचनी तु वह्नीन्दू आत्मयोनी स्मरानिलौ ॥ १६ ॥
ब्रह्माप्यथोपचर्यायामुपचार उपायने ।
उपनाहो वैरबन्धे वीणायाश्च निबन्धने ॥ १७ ॥
उपक्रमश्चिकित्सायामुपधारंभयोरपि ।
उपग्रहस्तु बन्दौ स्याद्ग्रहणेऽप्यनुकूलने ॥ १८ ॥
उपतापौ रुजातापौ द्वारपालेऽप्युदास्थितः ।
स्नानाचान्त्योरुपस्पर्शो हरावुच्चैश्श्रवा हये ॥ १९ ॥
दात्यौहाली कलक्काणौ खङ्गिखङ्गौ करालिकौ ।
कलहंसो राजहंसे कादंबे श्रेष्ठभूभुजि ॥ २० ॥
कुरुविन्दो हिङ्गुलेऽपि मुस्तेऽप्यथ गुहाशयः ।
ऋक्षे सिंहे च कूर्मे च ग्रहराजोऽर्कचन्द्रयोः ॥ २१ ॥
घनाघनो मत्तगजे वासवे वार्षुकांबुदे ।
चक्रपादौ रथगजौ चित्रभानू इनानलौ ॥ २२ ॥
देशे जने जनपदश्चन्द्रेऽर्केऽग्नौ तमोनुदः ।



तमोपहोऽप्यथोलूके तस्करे कुमुदाकरे ॥ २३ ॥
दिवाभीतो दिवाकीर्ती पुनश्चण्डालनापितौ ।
दर्दुरीकोऽनले वाद्ये पार्थाग्नीन्द्रा धनञ्जयाः ॥ २४ ॥
अग्न्युत्पातौ धूमकेतू धन्वन्तरिरिनाब्जयोः ।
पर्परीकौ वह्निभक्ष्यौ शौर्योद्योगौ पराक्रमौ ॥ २५ ॥
अग्निरुद्रौ पशुपती नाशावज्ञे पराभवौ ।
रक्षस्सन्तौ पुण्यजनौ नीचमूर्खौ पृथग्जनौ ॥ २६ ॥
द्वारद्वास्थौ प्रतीहारौ स्तनांभोदौ पयोधरौ ।
काशे नडे पोटगलः पवमानोऽग्निवातयोः ॥ २७ ॥
परिमर्देऽपि परिमलः पितामहौ ब्रह्मपितृतातौ ।
परिवारः प्रावारेऽपि नृपार्हार्थेऽपि परिबर्हः ॥ २८ ॥
परिवर्तो जगन्नाशे निमयेऽब्दे परिभ्रमे ।
पर्युप्तौ च परीवाप आलवाले परिच्छदे ॥ २९ ॥
पत्नीस्वीकारशपथमूल्येष्वपि परिग्रहः ।
परिक्षेपो हस्तिपादपार्श्वे संपरिवेष्टने ॥ ३० ॥
प्रतियत्नस्तु संस्कार उपग्रहणलिप्सयोः ।
स्थाने गोष्ठ्यां सत्रशाले प्रत्याहारे प्रतिश्रयः ॥ ३१ ॥
प्लवंगमः कपौ भेके प्लवंगप्लवगाविव ।
मौक्तिकेऽस्त्रे पारशवो विप्राच्छूद्रासुतेऽयसि ॥ ३२ ॥
विवेके स्यात् परिकरः पर्यस्तिपरिवारयोः ।
प्रगाढना त्रिकाबन्धे समूहारंभयोरपि ॥ ३३ ॥
प्रतिग्रहः क्रियाकारे चमूपृष्ठे पतद्ग्रहे ।
दानद्रव्ये स्वीकृतौ च त्वष्टर्यर्के प्रजापतिः ॥ ३४ ॥
दक्षादिष्वग्निजामात्रो राज्ञि ब्रह्मणि धातरि ।

ब्रह्मपुत्रस्तु रुद्रेऽपि बाहुलेयो गुहे वृषे ॥ ३५ ॥
धूम्याटेऽली भृंगराजो महाराजौ नृपार्थपौ ।
महालयो महागेहे विहारे परमात्मनि ॥ ३६ ॥
महाकालस्तु किंपाके हरे बाणासुरेऽपि च ।
रजसानू घर्ममेघौ रौहिणेयौ हलीन्दुजौ ॥ ३७ ॥
लक्ष्मीपुत्रोऽश्व आढ्ये च राज्ञि लक्ष्मीपतिर्हरौ ।
लोकपालो नृपेन्द्राद्योर्हये वातप्रमीर्मृगे ॥ ३८ ॥
बाडवेयोऽश्विनोर्विप्रे वासुदेवो हये हरौ ।
विश्वगोप्ता हरौ शक्रे चन्द्रेऽर्केऽग्नौ विभावसुः ॥ ३९ ॥
वृषसानुः पुंसि मृत्यौ विष्णौ रुद्रे वृषाकपिः ।
वानप्रस्थौ मधुष्ठीलपलाशावथ संकरे ॥ ४० ॥
व्यसने च व्यतिकरो विश्वकर्माब्जजो रविः ।
त्वष्टा च विप्रलापस्तु विप्रलंभोपमर्दयोः ॥ ४१ ॥
वारवाणिर्ज्यौतिषिके धर्माध्यक्षेऽप्यथो वटे ।
वनस्पतिर्वृक्षमात्रेऽप्यग्नीन्द्वर्का विरोचनाः ॥ ४२ ॥
व्यवहारो वाक्प्रयोगे संबन्धे द्यूतदण्डयोः ।
शासने वित्तसंवादे विवादेऽसिवणिज्ययोः ॥ ४३ ॥
वर्धमानश्शरावे स्यादेरण्डे भूषणेऽपि च ।
शंकुकर्णौ गर्दभोष्ट्रावलिबाणौ शिलीमुखौ ॥ ४४ ॥
श्रीवत्सांकौ हरिवृकौ सिंहकाकौ सकृत्प्रजौ ।
सहसानुर्मयूरेऽहौ संप्रयोगो रतेऽन्वये ॥ ४५ ॥
स्तनयित्नुर्गर्जितेऽभ्रे विरोधे तु समुच्छ्रयः ।
उन्नतावप्यथ क्रोष्टौ शुनि सालावृको वृके ॥ ४६ ॥
समाहारस्तु संक्षेप एकत्र करणेऽपि च ।



समाह्वयस्तु पक्ष्याद्यैर्द्यूते नामनि संयुगे ॥ ४७ ॥
सांपरायस्तु संग्राम आपदागामिकालयोः ।
स्थूलोच्चयस्त्वसाकल्ये गजानां मध्यमे गते ॥ ४८ ॥
सोमयोनिस्सुरे विप्रे हरिरोमाब्जजेन्द्रयोः ।
हस्तिमल्लो गणपतौ महेन्द्रस्य च कुञ्जरे ॥ ४९ ॥

(इति चतुरक्षराः)

वर्णमात्रेऽभिनिष्ठानो हरीशावपराजितौ ।
आशुशुक्षणिरर्केऽग्नौ यज्वन्यप्यासुतीवलः ॥ ५० ॥
शौण्डिके चाप्यथानन्ते कुबेरे चैककुण्डलः ।
आम्रे चामरपुष्पः स्यात् काशकेतकयोरपि ॥ ५१ ॥
ज्योतिषांपतिरर्के च चन्द्रे चाप्यथ चुंबने ।
ओष्ठे च दशनोच्छिष्ट उच्छ्वासेऽप्यथ नीपके ॥ ५२ ॥
धूलीकदंबो वरुणफलेऽथो नागवारिकः ।
गणस्थे हस्तिपाले च यमेऽपि पृथिवीपतिः ॥ ५३ ॥
प्राचीनबर्हिरिन्द्राग्न्यो रुद्रेन्द्रौ मेघवाहनौ ।
मातुलपुत्रस्तून्मत्तफले मातुलसुतेऽपि स्यात् ॥ ५४ ॥
कुटजेऽपि च यवफलको वडबामुख और्ववह्नौ च ।
विकंकते गोक्षुरे च कोल्याश्च स्वादुकण्टकः ॥ ५५ ॥
निंबेऽपि हिंगुनिर्यासो हिंगुवृक्षरसेऽपि च ।
हिरण्यबाहुश्शोणाख्ये नदे विषमलोचने ॥ ५६ ॥

(इति पञ्चाक्षराः)

निदाघ ऊष्मणि ग्रीष्मे स्वेदे घर्मस्तु तेषु च ।
आतपे च दिने चाथ वरुणे यादसांपतिः ॥ ५७ ॥

यादस्पतिश्च तावब्धावप्यथो यक्षगुह्यकौ ।
धनदेऽप्यथ वृक्षेऽद्रौ शिखर्यगनगागमाः ॥ ९८ ॥
भ्रमरेष्टालिप्रियाद्या आम्रे जंबूकनीपयोः ।
वतंसोत्तंसावतंसाः कर्णपूरेऽपि शेखरे ॥ ९९ ॥
अंशौ च केतुसूक्ष्माग्रा अप्यद्रौ शृंगिभैरवौ ।

(इति विषमाक्षराः)

आकाशे दिवसे च द्युर्विः पक्षिपरमात्मनोः ॥ ६० ॥
पुमांसौ पुरुषात्मानौ मासौ मासनिशाकरौ ।

(इत्येकाक्षराः)

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां शेषकाण्डे पुंलिङ्गाध्यायः)

---



स्त्रीलिङ्गाध्यायः

अर्चनायामपचितिः प्रक्षये निष्कृतौ व्यये ।
अजमोदा शाल्मलेश्च निर्यासेऽथ गदद्रुहि ॥ १ ॥
धात्र्यां पाल्यां चांकपालिरभिशस्तिस्तु दूषणे ।
प्रार्थने चान्तशय्या तु भूमिशय्याश्मशानयोः ॥ २ ॥
अनर्थवाचीतिकथा स्यादश्रद्धेयवाचि च ।
रहस्यार्थे तूपनिषद्धर्मवेदान्तयोरपि ॥ ३ ॥
उपलब्धिस्तु शेमुष्यां प्राप्तिविज्ञानयोरपि ।
ऋश्यप्रोक्ता शतावर्यां कण्डूरातिबलर्धिषु ॥ ४ ॥
फलिनी स्याद्गण्डफली कलिका चंपकस्य च ।
वाद्यभेदे घर्घरिका वाद्यानां लगुडेऽपि च ॥ ५ ॥
श्रीवेष्टे तैलपर्णी स्याद्धवलेऽपि च चन्दने ।
दाक्षायणी भवान्यां भुव्यश्विन्याद्युडुषु श्रियाम् ॥ ६ ॥
गौरीदिशोर्दक्षकन्या प्रतिपत्तिस्तु गौरवे ।
प्रख्याप्तिप्रतिभाज्ञानेष्वथ नीलीविशल्ययोः ॥ ७ ॥
मधुपर्णीत्यथ द्राक्षादूर्वे मधुरसेत्युभे ।
चुच्छुन्दर्यां राजपुत्री राजकन्या पिचिण्डके ॥ ८ ॥
वैजयन्ती पताकायां जयन्त्यां केशवस्रजि ।
गुञ्जायूथ्यौ शिखण्डिन्यौ द्राक्षा स्वादुरसा सुरा ॥ ९ ॥
समुद्रान्ता यवासे च कार्पासीस्पृक्कयोरपि ।
गौर्यामपि सिनीवाली मदिरापि हरिप्रिया ॥ १० ॥
गङ्गा पथ्या हैमवती गौरी शुक्लवचापि च ।

(इति चतुरक्षराः)

गोरक्षजंबूर्गोधूमधान्ये गोरक्षतण्डुले ॥ ११ ॥
चिलिमीलिकातसी स्यात् खद्योते कण्ठभूषणे चापि ।
योजनगन्धा सीता कस्तूरी व्यासमाता च ॥ १२ ॥
वृषाकपायी श्रीगौर्योश्शोफघ्न्यां प्रावृषायणी ।
हरिद्रायां वरायां च रामायां वरवर्णिनी ॥ १३ ॥

(इति पञ्चाक्षराः)

व्यथने सूचना सूचा दर्शनेऽभिनयेऽपि च ।
पार्वत्यामपि मातंगी रौद्रयुग्रा कौशिकीति च ॥ १४ ॥
माषपर्ण्यां कृष्णवृन्ता सिंहपुच्छा महासहा ।
रात्रावप्यर्जुनी सौम्या शिखा चूडा शिरस्यपि ॥ १५ ॥

(इति विषमाक्षराः)

भूः क्षितौ स्थानमात्रे च वम्रिकायोषितोः स्त्रियौ ।
उपायद्वारयोर्द्वास्स्यात् पूस्स्यान्नगरदेहयोः ॥ १६ ॥
धूस्स्याद्यानमुखे भारे नौस्तु काले तरावपि ।
ज्या पृथिव्यां च मौर्व्यां च स्वर्व्योम्नोर्द्योर्दिवावुभौ ॥ १७ ॥
ऋशब्दस्स्याद्दिव्यदितौ त्विड् ज्वालाकान्तिदीप्तिषु ।
उत्साहेऽन्नरसेऽप्यूर्क् स्यात् स्रुक् स्रुवे शोषणे गतौ ॥ १८ ॥
लक्ष्मीरिव लवंगे श्रीः पद्मायां कान्तिसंपदोः ।
रुग्ज्वालाकान्तिवांछासु तृट् तु लिप्सापिपासयोः ॥ १९ ॥
यथा तृष्णा यथा तर्षस्त्वग्गन्धद्रव्यवल्कयोः ।

(इत्येकाक्षराः)

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां शेषकाण्डे स्त्रीलिङ्गाध्यायः)



## नपुंसकलिङ्गाध्यायः

अत्याहितं महाभीत्यां प्राणानाकांक्षिकर्मणि ।
अपदानं कर्मणि स्यादतिवृत्तेऽवखण्डने ॥ १ ॥
अभ्याधानमभिन्यासे वह्न्यर्थं चेध्मसङ्ग्रहे ।
अन्वाहार्यममावास्याश्राद्धमिष्टेश्च दक्षिणा ॥ २ ॥
समूहे स्यादाकलनं कलनज्ञानयोरपि ।
आच्छादनं संविधाने स्यादावरणवाससोः ॥ ३ ॥
आतंचनं प्रतीवापे जपाप्यायनयोरपि ।
आराधने तोषणाप्ती घात आयोधनं रणे ॥ ४ ॥
जन्मोद्गमावुत्पतने रहोऽन्तिकमुपह्वरे ।
उद्वासने वधोद्वासावप्युत्सादनमुन्नतौ ॥ ५ ॥
स्यादुद्धरणमुद्वान्तभक्तेऽप्युत्पाटनेऽपि च ।
तिन्त्रिडीकन्तु वृक्षाम्ले चिंचायामम्लवेतसे ॥ ६ ॥
त्रिपर्णकं त्रिगन्धे स्यात्त्रिफलायां कटुत्रये ।
निर्यातनं प्रतीकारे दाने न्यासधनार्पणे ॥ ७ ॥
निर्भर्त्सनमलक्तेऽपि मोक्षे निश्श्रेयसं शुभे ।
शस्त्रे युद्धे प्रहरणं कार्ये हेतौ प्रयोजनम् ॥ ८ ॥
प्रतिदानं परीवर्ते न्यासद्रव्यस्य चार्पणे ।
पारायणं कार्त्स्न्यवचस्यंकुशस्य च बन्धने ॥ ९ ॥
प्राणिद्यूतं तु संग्रामे द्यूते च पशुपक्षिभिः ।
शुण्ठ्यामतिविषायां च लशुने च महौषधम् ॥ १० ॥
रतर्धिकं सुखे स्नाने दीनमंगलयोरपि ।
शब्दशास्त्रे व्याकरणं ज्याटंकारे स्फुटीकृतौ ॥ ११ ॥
विदारणं तु काष्ठादेर्द्वैधीकारे विडंबने ।

संसारे स्यात्संसरणमसंबाधचमूगतौ ॥ १२ ॥
समापनायां हिंसायां समाप्तौ च समापनम् ।

(इति चतुरक्षराः)

अवतरणं भूतादिग्रहे निवसनाञ्चले ॥ १३ ॥
स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि ।
दुग्धाग्रे दुग्धतालीयं स्यात् फेनेऽपि च दुग्धजे ॥ १४ ॥
निन्दोपालंभ आलापे नियमे परिभाषणम् ।

(इति पञ्चाक्षराः)

पराक्रमे धने द्युम्नं द्रविणं तु ग्रहेऽपि च ॥ १५ ॥
आगः किल्बिषमेनश्च त्रीणि पाप्मापराधयोः ।
शकुनं च निमित्तं च शुभादेस्सूचकेऽपि च ॥ १६ ॥
यज्ञोपवीतोपवीते ब्रह्मसूत्रोत्तरीययोः ।
गंभीरं गहनं रत्नं गह्वरं शरणं वपुः ॥ १७ ॥
स्नेहं सेव्यं महच्छुद्धं धरुणं सर्वतोमुखम् ।
पातालं स्वादु दिव्यं च तानि पंचदशाप्स्वपि ॥ १८ ॥

(इति विषमाक्षराः)

खमिन्द्रिये दिवि व्योम्नि रन्ध्रनक्षत्रयोरपि ।

(इति एकाक्षरः)

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां शेषकाण्डे नपुंसकलिङ्गाध्यायः)



## अभिधेयवल्लिङ्गाध्यायः

अभिजातः कुलीने च न्याय्यपण्डितयोरपि ।
अभिनीतस्सुयुक्ते स्यादमर्षवति संस्कृते ॥ १ ॥
अभिपन्ना विपन्नाप्तग्रस्तात्तद्रुतदक्षिणाः ।
अधिक्षिप्तं प्रणिहिते प्रेषिते भर्त्सितेऽपि च ॥ २ ॥
निश्चिते स्यादवसितं समाप्त उषितेऽपि च ।
अवदातस्सिते गौरे शुद्धे चाथावलंबिते ॥ ३ ॥
अविदूरेऽप्यवष्टब्धमसंपृक्तो रहस्यपि ।
उज्झितेऽधिकृतेऽपि स्यादवध्वस्तोऽवचूर्णिते ॥ ४ ॥
स्यादभ्यारूढमारूढे सातिरेके च संपदा ।
उत्कीर्णे स्यादुल्लिखितमनुषक्ते तनूकृते ॥ ५ ॥
उद्ग्राहितमुपन्यस्ते बद्धग्राहितयोरपि ।
कौकुटिको डांभिके स्याद्यश्चादूरेरितेक्षणः ॥ ६ ॥
दशमीस्थस्तु स्थविरे नष्टबीजे मृताशने ।
परिप्राप्ते परिगतं प्रज्ञाते परिवेष्टिते ॥ ७ ॥
प्रतिशिष्टप्रतिक्षिप्तावाहूयप्रेषितास्तयोः ।
विशिष्टे स्यात्प्रतिहतं प्रतिस्खलितवस्तुनि ॥ ८ ॥
समाहिते प्रणिहितं न्यस्ताभिप्राप्तयोरपि ।
पुरस्कृतः पूजिते द्विडभियुक्तेऽग्रतः कृते ॥ ९ ॥
पौरुषेयं वधे पुंसो बृन्दे कार्यविकारयोः ।
ब्रह्मबन्धुरधिक्षेप्ये निर्देश्ये ब्राह्मणाधमे ॥ १० ॥
यातयामं यातयामे जीर्णे भुक्तोज्झितेऽपि च ।
लालाटिकः प्रभोश्छन्ददर्शी कार्याक्षमश्च यः ॥ ११ ॥

विशारदो बुधे धृष्टे वंचिते तु विलंबितम् ।
मन्दे चाथ समुन्नद्धौ पण्डितम्मन्यगर्वितौ ॥ १२ ॥

(इति चतुरक्षराः)

कथाप्रसङ्गस्तु विषवैद्ये वाताधिकेऽपि च ।

(इति पञ्चाक्षरः)

प्रहृष्टो हृषितो हृष्टः प्रहर्षवति विस्मिते ॥ १३ ॥
सरोमाञ्चे प्रतिहतेऽप्यथ सम्प्रभदग्धयोः ।
स्युः प्रदीप्तप्रज्वलितदीप्ता ज्वलित इत्यपि ॥ १४ ॥
कुत्सिते वाच्यवक्तव्यौ वदितव्यविहीनयोः ।
प्राप्तरूपोऽभिरूपश्च पण्डिते रूपवत्यपि ॥ १५ ॥

(इति विषमाक्षराः)

सन् सत्येऽभ्यर्हिते श्रेष्ठे साधीयसि भवत्यपि ।
किं प्रश्नाक्षेपकुत्सानां वितर्कस्य च गोचरे ॥ १६ ॥

(इति एकाक्षरौ)

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां शेषकाण्डे अभिधेयवल्लिङ्गाध्यायः)

---



## नानालिङ्गाध्यायः

सुखाब्ध्यर्को अव्यथिषा अव्यथिष्यौ निशाक्षिती ।
अवगीतं मुहुर्दृष्टे निर्वादे गर्हितेऽपि च ॥ १ ॥
पुमानधिपतिर्मूर्ध्न आवर्तेऽधीश्वरे त्रिषु ।
कांचने शारिफलके स्यादष्टापदमस्त्रियाम् ॥ २ ॥
अंबरीषं रणे वर्षे तृणे नार्ककिशोरयोः ।
आत्मनीनस्सुते स्याले प्राणधारिणि दूषके ॥ ३ ॥
आडंबरोऽस्त्री संरंभे पटहे गजगर्जिते ।
उदुंबरो द्रुदेहल्योर्ना क्ली हेमाक्षताम्रयोः ॥ ४ ॥
वचाजमोदयोरुग्रगन्धा ना लशुने सिते ।
कलधौतं रूप्यहेम्नोष्षण्डस्त्री तु कलध्वनौ ॥ ५ ॥
कर्णपूरो वतंसे ना क्ली सौगन्धिक उत्पले ।
काण्डपृष्ठः क्रीतसुते दत्ते शूद्रासुतांभसोः ॥ ६ ॥
शस्त्राजीवे च यश्चान्यकुलं याति स्वकं विना ।
नासा गन्धवहा गन्धवहो मृगनभस्वतोः ॥ ७ ॥
जलेशयो जलकपौ मत्स्ये पद्मं जलेशयम् ।
जीवितेशः प्रेतनाथे दयिते द्रविणागमे ॥ ८ ॥
जैवातृकश्चन्द्रभिषगायुष्मत्सु कृषीवले ।
अम्ललोण्यां दन्तशठा त्रिष्वम्लेऽम्लगुणे तु ना ॥ ९ ॥
दुरोदरं नपुं द्यूते पणे द्यूतकरे तु ना ।
नारायणी शतावर्यां लक्ष्म्यां गौर्यां च ना हरौ ॥ १० ॥
निश्चारको निर्गमके पुरीषोत्सर्गिमारुते ।
निषद्वरी निशा कामकर्दमौ तु निषद्वरौ ॥ ११ ॥

निरूपणा नपुं स्त्री च निरीक्षणविचारयोः ।
निशाचर्यसती फेरू रक्षस्सर्पौ निशाचरौ ॥ १२ ॥
यूथभ्रष्टे पक्षचरस्स्यादेकचरपक्षिणोः ।
परायणमभिप्रेते तत्परे परमाश्रये ॥ १३ ॥
प्रतिष्कशः पुमान् दूते त्रिष्वग्रगसहाययोः ।
अस्त्री प्रतिसरो हस्तसूत्रे ना तु चमूकटौ ॥ १४ ॥
आरक्षे व्रणशुद्धौ च नियोज्ये त्वभिधेयवत् ।
पारावतः खगातस्योरीषत्पाण्डौ च पारदे ॥ १५ ॥
नीचे व्रीहाविन्द्रनीले प्राणनाथो यमे प्रिये ।
पुण्डरीकं सितच्छत्रे कुष्ठभेदे सितांबुजे ॥ १६ ॥
ना त्वाम्रे दिग्गजे व्याघ्रे राजिलाहौ गजे ज्वरे ।
दीप्त्यां प्रद्योतनं नार्के घोरे प्रतिभयं भये ॥ १७ ॥
नकुले मूषिकेऽहौ ना गोधायां स्त्री बिलेशयः ।
बृन्दारकः पुमान्देवे श्रेष्ठसुन्दरयोस्त्रिषु ॥ १८ ॥
भागधेयं नपुं भाग्ये दायादे ना करे न षण् ।
मस्तुलुंगश्शिरस्स्नेहे न स्त्री क्ली दधिमण्डके ॥ १९ ॥
ओतौ चारौ धौतिदेशे मार्जालीयोंऽगशोधने ।
महावीरो यज्ञपात्रे गरुडे सुभटे खगे ॥ २० ॥
वज्रेऽश्वे तनये हंसे शूरेऽग्नौ प्रवरे हरौ ।
राजादनं प्रियाले ना क्षीरिकायां पलाशके ॥ २१ ॥
वारवाणं तु कूर्पासे कवचेऽपि च न स्त्रियाम् ।
विश्वंभरा धरित्री स्यादग्नौ विश्वंभरो हरौ ॥ २२ ॥
विश्वावसुस्तु गन्धर्वभेदे ना स्त्री पुनर्निशि ।
वेणौ ना दूर्वावचयोस्स्त्री बिले शतपर्व षण् ॥ २३ ॥



शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ।
पलमाने षोडशिका न ना न स्त्री पलद्वये ॥ २४ ॥
सनातनो हृषीकेशे चतुर्वक्त्रे सदातने ।

(इति चतुरक्षराः)

आशितंभवमन्नादि तृप्तिस्स्यादाशितंभवः ॥ २५ ॥
पर्याप्तावुपसंपन्नं मृते प्राप्ते सुसंस्कृते ।
नक्षत्रनेमी रेवत्यां स्त्री ना विष्णौ हिमद्युतौ ॥ २६ ॥
मूर्धाभिषिक्तो ना राज्ञि क्षत्रिये चार्थवत् प्रभौ ।
हरिचन्दनमस्त्री स्याच्चन्दने देवपादपे ॥ २७ ॥

(इति पञ्चाक्षराः)

श्रेष्ठे वृषांगे राजांके ककुदोऽस्त्री ककुन्न षण् ।
तपस्वी शिशिरे शोच्ये चन्द्रे मांसी तपस्विनी ॥ २८ ॥
द्वीपवत्यौ धरानद्यौ द्वीपवानंबुधौ नदे ।
धर्मे वाद्ये प्रसृत्वा ना प्रतिपत्तिः प्रसृत्वरी ॥ २९ ॥
पद्मी गजे पद्मिनी तु नलिन्यां हस्तिनीश्रियोः ।
ब्रह्मचारी व्रती स्कन्दो दुर्गा तु ब्रह्मचारिणी ॥ ३० ॥
भगवत्युमा भगवान् बुद्धे पूज्ये हरे हरौ ।
भोगी ग्रामाद्यधिकृते सर्पे सुखिमहीभुजोः ॥ ३१ ॥
विहाय महिषीमेकां भोगिन्योऽन्या नृपस्त्रियः ।
श्रेयोऽत्यन्तं प्रशस्ते स्यात् कल्याणे धर्ममोक्षयोः ॥ ३२ ॥
श्रेयसी हस्तिपिप्पल्यामभयारास्नयोरपि ।
सरस्वती सरिद्भेदे सरिन्मात्रे गवि क्षितौ ॥ ३३ ॥

मत्स्याक्ष्यां वाचि गंगायां सरस्वानंबुधौ नदे ।

(इति विषमसंख्याः)

विभूतिर्भूतिरैश्वर्यमणिमादिकसंपदोः ॥ ३४ ॥
ईशेश्वरौ प्रभौ रुद्रे पार्वत्यामीश्वरेश्वरी ।
स्वभावे स्यान्निसर्गश्च सृष्टिश्चोत्पादनेऽपि च ॥ ३५ ॥
गेहे कुलायो नीडोऽस्त्री रेतस्यपि रजो मदः ।

(इति विषमाक्षराः)

काश्चित्तात्मार्कधीधातृवाता मूर्ध्नि सुखेऽप्सु कम् ॥ ३६ ॥
द्युपश्विष्वंशुवज्रांबुभूवाग्दिग्दृक्षु गौर्न षण् ।
दृक् स्त्री स्याद्दर्शने बुद्धौ नेत्रे द्रष्टरि तु त्रिषु ॥ ३७ ॥
स्वोऽस्त्री धने त्रिषु स्वीय आत्मनि स्वजने तु ना ।
गूर्गुदे स्त्री प्रयत्ने ना रा न क्ली धनरुक्मयोः ॥ ३८ ॥
आत्मनि ज्ञातरि ज्ञस्स्यान्ना विड्वैश्ये जने न षण् ।
तेशब्दः क्रीडने स्त्री स्यात् क्रीडके त्वभिधेयवत् ॥ ३९ ॥
सेशब्दस्सेवने स्त्री स्यात्सेवके त्वभिधेयवत् ।

(इति एकाक्षराः)

---

(इति भगवता यादवप्रकाशेन विरचितायां वैजयन्त्यां
शेषकाण्डे नानालिङ्गाध्यायः)

---



पर्यायसंयोगन्यायप्रदर्शनाध्यायः

धातुस्सर्वेऽपि पर्याया रुद्राक्षे स्युश्चतुर्मुखे ।
तस्मिन् पञ्चमुखे शंभोः कुमारस्य तु षण्मुखे ॥ १ ॥
गुग्गुलूलूककुटजेष्विन्द्रस्याग्नेश्च चित्रके ।
भल्लातकेऽप्यथार्कस्य भल्लातक्यर्कपर्णयोः ॥ २ ॥
कर्पूरकंपिल्लकयोरिन्दोर्वज्रस्य हीरके ।
गौर्यास्त्वतस्यां कौबेरा वन्दाके क्षीरवृक्षजे ॥ ३ ॥
खस्याभ्रके ब्रह्मणि च मेघस्याभ्रकमुस्तयोः ।
भुवो नामानि सौराष्ट्र्यां शैलेये ग्रावशैलयोः ॥ ४ ॥
शर्वर्यास्तु हरिद्रायां प्रियंगुव्रततौ स्त्रियाः ।
ध्वजधूममृगेन्द्राणां श्वोक्षरासभहस्तिनाम् ॥ ५ ॥
वायसस्य च पर्यायाः क्रमात् पूर्वादिवेश्मसु ।
हंसेन्दुकुमुदां रूप्ये कुमुदेऽपि खरस्य षण् ॥ ६ ॥
स्योनाके तु सृगालस्य वानरस्य तु सिह्लके ।
स्पृक्कायां तस्करस्य स्युरुशीरे समरस्य हि ॥ ७ ॥
वाल्यालकेऽस्य सान्नस्य शोणितस्य तु कुंकुमे ।
कुष्ठाख्यभेषजे व्याधेर्मातुर्गौर्यां दृषद्रवोः ॥ ८ ॥
पिण्डारे त्ववटोः पाणेश्चायुधस्य त्वयस्यपि ।
अपराधे तु रन्ध्रस्य बदरस्य तु नागरे ॥ ९ ॥
रुक्मस्यांजनभेदे क्ली पुंलिङ्गा नागकेसरे ।
उन्मत्तेऽपि च बिन्दोस्तु सिध्मादौ देहवैकृते ॥ १० ॥
रूप्यस्यांजनभेदे स्युरटव्यां जलमुस्तके ।
षण्डाः केशस्य बर्हिष्ठे शिरसश्शिखरे तरोः ॥ ११ ॥

